Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# ऋग्वेदे मण्डलानुसारेण मन्त्रसंख्या ।

| मण्डलानि । | सूक्तसंख्या । | मन्त्रसंख्या । |
|---|---|---|
| प्रथममण्डलस्य | १९१ | २००६ |
| द्वितीयमण्डलस्य | ४३ | ४२९ |
| तृतीयमण्डलस्य | ६२ | ६१७ |
| चतुर्थमण्डलस्य | ५८ | ५८९ |
| पञ्चममण्डलस्य | ८७ | ७२७ |
| षष्ठमण्डलस्य | ७५ | ७६५ |
| सप्तममण्डलस्य | १०४ | ८४१ |
| अष्टममण्डलस्य | ९२ | १६३६ |
| नवममण्डलस्य | ११४ | ११०८ |
| दशममण्डलस्य | १९१ | १७५४ |
| | १०१७ | १०४७२ |
| वालखिल्यसूक्तानाम् | ११ | ८० |
| | १०२८ | १०५५२ |

# अष्टकानुसारेण मन्त्रसंख्या ।

| अष्टकानाम् । | सूक्तानि । | वर्गाः । | ऋचः । | अक्षराणि । |
|---|---|---|---|---|
| प्रथमाष्टकस्य | १२१ | २६५ | १३७० | ४८९३१ |
| द्वितीयाष्टकस्य | ११९ | २२१ | ११४७ | ५१७१८ |
| तृतीयाष्टकस्य | १२२ | २२५ | १२०९ | ४७६३६ |
| चतुर्थाष्टकस्य | १४० | २५० | १२८९ | ४२७६२ |
| पञ्चमाष्टकस्य | १२९ | २३८ | १२६३ | ४८०२२ |
| षष्ठाष्टकस्य | १२४ | ३१३ | १६५० | ४८४१२ |
| सप्तमाष्टकस्य | ११६ | २४८ | १२६३ | ४७५६२ |
| अष्टमाष्टकस्य | १४६ | २४६ | १२८१ | ५२२७८ |
| | १०१७ | २००६ | १०४७२ | ३९४२२१ |
| वालखिल्यसूक्तानाम् | ११ | १८ | ८० | ३०४४ |
| | १०२८ | २०२४ | १०५५२ | ३९७२६५ |

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# ऋग्वेदे गायत्र्यादिच्छन्दसां मन्त्रसंख्या ।

| छन्दोनामानि । | अक्षरसंख्या । | छन्दसां मन्त्रसंख्या । | अक्षराणि । |
|---|---|---|---|
| १ गायत्री | २४ | २४४९ | ५८,७७० |
| २ उष्णिक् | २८ | ३९८ | ११,१४४ |
| ३ अनुष्टुप् | ३२ | ८५८ | २७,४५६ |
| ४ बृहती | ३६ | ३७१ | १३,३०६ |
| ५ पङ्क्तिः | ४० | ४९८ | १९,९२० |
| ६ त्रिष्टुप् | ४४ | ४२५१ | १,८७,००४ |
| ७ जगती | ४८ | १३४६ | ६४,६०८ |
| ८ अतिजगती | ५२ | १७ | ८८४ |
| ९ शक्वरी | ५६ | १९ | १,०६४ |
| १० अतिशक्वरी | ६० | १० | ६०० |
| ११ अष्टिः | ६४ | ७ | ४४८ |
| १२ अत्यष्टिः | ६८ | ८२ | ५,५७६ |
| १३ धृतिः | ७२ | २ | १४४ |
| १४ अतिधृतिः | ७६ | १ | ७६ |
| १५ द्विपदा गायत्री | १६ | ३ | ४८ |
| १६ द्विपदा विराट् | २० | १३९ | २,७८० |
| १७ द्विपदा त्रिष्टुप् | २२ | १४ | ३०८ |
| १८ द्विपदा जगती | २४ | १ | २४ |
| १९ एकपदा विराट् | १० | ५ | ५० |
| २० एकपदा त्रिष्टुप् | ११ | १ | ११ |
| | | १०४७२ | ३,९४,२२१ |

# वालखिल्यादि सूक्तानां छन्दसां मन्त्रसंख्या।

| छन्दोनामानि । | अक्षरसंख्या । | छन्दसां मन्त्रसंख्या । | अक्षराणि । |
|---|---|---|---|
| १ गायत्री | २४ | ७ | १६८ |
| २ अनुष्टुप् | ३२ | २ | ६४ |
| ३ बृहती | ३६ | ५६ | २११८ |
| ४ पङ्क्तिः | ४० | १ | ४० |
| ५ त्रिष्टुप् | ४४ | ७ | ३०८ |
| ६ जगती | ४८ | ७ | ३३६ |
| | | ८० | ३०४४ |
| | | सर्वयोगः १०५५२ | ३९७२६५ |

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# अथ परिशिष्टानि ।

## ( अथ खिलसूक्तानि । )

( १ ) [ ऋ० अ० १-४-८ ] [ ऋ० मं० १।५० सूक्तस्यानन्तरम् ]

शनैश्चिदद्य सूर्येणाऽऽदित्येन सहीयसा । अहं यशस्विनां यशो विद्यारूपमुपा ददे १
उद्यन्नद्य वि नो भज पिता पुत्रेभ्यो यथा । दीर्घायुत्वस्य हेशिषे तस्य नो धेहि सूर्य २
उद्यन्तं त्वा मित्रमह आरोहन्तं विचक्षण । पश्येम शरदः शतं जीवेम शरदः शतम् ३

( २ ) [ ऋ० अ० २-५-१६ ] [ ऋग्वेदस्य प्रथममण्डलस्यान्ते । ]

मा बिभेर्न मरिष्यसि परि त्वा पामि सर्वतः । घनेन हन्मि वृश्चिकमहिं दण्डेनागतम् १
आदित्यरथवेगेन विष्णुर्बाहुबलेन च । गरुडपक्षनिपातेन भूमिं गच्छ महायशाः २
गरुडस्य पातमात्रेण त्रयो लोकाः प्रकंपिताः । प्रकंपिता मही सर्वा सशैलवनकाननां ३
गगनं नष्टचन्द्रार्कं ज्योतिषं न प्रकाशते ।
देवता भयभीताश्च मारुतो न प्लवायति [ मारुतो न प्लवायत्यों नमः ] ४
भो सर्प भद्र भद्रं ते दूरं गच्छ महाविष । जन्मेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ५
आस्तीकवचनं श्रुत्वा यः सर्पो न निवर्तते । शतधा भिद्यते मूर्ध्नि शिंशवृक्षफलं यथा ६
नर्मदायै नमः प्रातर्नर्मदायै नमो निशि । नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः ७
यो जरत्कारुणा जातो जरत्कार्वां महायशाः । तस्य स्मराभि भद्रं ते दूरं गच्छ महाविष ८
[असितिं चार्थसिद्धिं च सुनीतिं चापि यः स्मरेत् । दिवा वा यदि वा रात्रौ नास्ति सर्पभयं भवेत् ९ *
अगस्तिर्माधवश्चैव मुचुकुंदो महामुनिः । कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः १० * ]

---

खिललक्षणं= " परशाखीयं स्वशाखायामपेक्षावशात्पठ्यते तत्खिलमुच्यते । "

[ म० भा० शां० ३२३।१० ( कुं० ) नीलकंठ-टीका ]

सू० १ पाठभेदाः— १ शनैश्चित्सूर्येण आ० । ०रूपाण्या ददे । १ । देहि ( तै० ब्रा० ७।६।२२ ) ।

सू० २ पाठभेदाः- १-०महं दण्डेना० । [ १ घनेन० । अथर्व० १०।४।९ ] ३ जातमात्रेण । ४ भयवित्रस्ता । ५ महायशाः । जनमेजयस्य । १० अगस्त्यो माधव० । [ * ९-१० बहुषु पुस्तकेषु नोपलभ्येते । ]

( ५-६ महाभारते आदि० ५८।२५-२६ कुं० )—

सर्पापसर्प भद्रं ते गच्छ सर्प महाविष । जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर ॥
आस्तीकस्य वचः श्रुत्वा यः सर्पो न निवर्तते । शतधा भिद्यते मूर्धा शिंशवृक्षफलं यथा ॥

८ जरत्कारुणाज्जातो; जगत्कारणाज्जातो । भूमिं गच्छ । महायशाः ।

( महाभारते आदि० ५८।२४ कुं० ) यो जरत्कारुणा जातो जरत्कारौ महायशाः ।

८-९ हरेत् । ( महाभारते आदि० ५८।२३ कुं० )

असितं चार्तिमन्तं च सुनीथं चापि यः स्मरेत् । दिवा वा यदि रात्रौ वा नास्य सर्पभयं भवेत् ॥



CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

( ३ ) [ऋ०अ०२-७-१५] [ऋ०मं०२-३२ सूक्तस्यानन्तरम्।]

८ हिरण्यगर्भः। १-२ कुहूः, ३-४ अनुमतिः, ५-८ धाता।
त्रिष्टुप्, ५ गायत्री; ३, ४, ७ अनुष्टुप्।

कुहूमहं सुवृतं विद्मनापस मस्मिन् यज्ञे सुहवां जोहवीमि।
सा नो ददातु श्रवणं पितॄणां तस्यै ते देवि हविषा विधेम १
कुहूर्देवानाममृतस्य पत्नी हव्या नो अस्य हविषः शृणोतु।
सं दाशुषे किरतु भूरि वामं रायस्पोषं यजमाने दधातु २
अनु नोऽद्यानुमति र्यज्ञं देवेषु मन्यताम्।
अग्निश्च हव्यवाहनो भवतं दाशुषे मयः ३
अन्विदनुमते त्वं मन्यासै शं च नस्कृधि।
क्रत्वे दक्षाय नो हिनु प्र ण आयूंषि तारिषत् ४
धाता दधातु नो रयि मीशानो जगतस्पतिः। स नः पूर्णेन वावनत् ५
धाता ददातु दाशुषे वसूनि प्रजाकामाय मीळ्हुषे दुरोणे।
तस्मै देवा अमृताः सं व्ययन्तां विश्वे देवासो अदितिः सजोषाः ६
धाता ददातु दाशुषे प्राचीं जीवातुमक्षिताम्।
वयं देवस्य धीमहि सुमतिं वाजिनीवतः ७
धाता प्रजानामुत राय ईशे धातेदं विश्वं भुवनं जजान।
धाता कृष्टीरनिमिषाभिचष्टे धात्र इद्धव्यं घृतवज्जुहोत ८

( ४ ) [ऋ० अ० २-८-१२] [ऋग्वेदस्य द्वितीयमण्डलस्यान्ते।]

भद्रं वद दक्षिणतो भद्रमुत्तरतो वद। भद्रं पुरस्तान्नो वद भद्रं पश्चात् कपिंजल १
भद्रं वद पुत्रै र्भद्रं वद गृहेषु च। भद्रमस्माकं नो वद भद्रं नो अभयं वद २
भद्रमधस्तान्नो वद भद्रमुपरिष्टान्नो वद। भद्रंभद्रं न आ वद भद्रं नः सर्वतो वद ३
असपत्नः पुरस्तान्नः शिवं दक्षिणतस्कृधि। अभयं सततं पश्चाद् भद्रमुत्तरतो गृहे ४
यौवनानि महयसि जिग्युषामिव दुंदुभिः। शकुंतक प्रदक्षिणं शतपत्राभि नो वद ५
आवदंस्त्वं शकुने भद्रमा वद तूष्णीमासीनः सुमतिं चिकिद्धि नः।
यदुत्पतन् वदसि कर्करिर्यथा बृहद्वदेम विदथे सुवीराः ६

सू० ४ पाठभेदाः- १ क-पिंगलः ( निरु० ३।४।१८ )। २ ०स्माकं वद; ०भयं कृधि। ४ असपत्नं। ६ ( ऋ० २।४३।३ )॥

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

( ५ ) [ऋ० अ० ४-२-२५] [ऋ० मं० ५।४४ सूक्तस्यानन्तरम् । ]

जागर्षि त्वं भुवने जातवेदो जागर्षि यत्र यजते हविष्मान् ।
इदं हविः श्रद्दधानो जुहोमि तेन पासि गुह्यं नाम गोनाम् १

( ६ ) [ऋ० अ० ४-३-३] [ऋ० मं० ५।४९ सूक्तस्यानन्तरम् । ]

सूक्तान्तेऽस्येत्तृणान्यग्ना-विरिणे वोवृकेऽपि वा । यवुस्तृणैरधीतं तत् तृणानि भवति ध्रुवम् १
वापीकूपतडागानां समुद्रं गच्छ स्वाहा [ अग्निं गच्छ स्वाहा ] २

( ७ ) [ऋ० अ० ४-३-७] [ऋ० मं० ५।५१ सूक्तस्यानन्तरम् । ]

स्वस्त्ययनं तार्क्ष्यमरिष्टनेमिं महद्भूतं वायसं देवतानाम् ।
असुरघ्नमिन्द्रसखं समत्सु बृहद्यशो नावमिवा रुहेम १
अंहोमुचमाङ्गिरसं गयं च स्वस्त्यात्रेयं मनसा च तार्क्ष्यम् ।
प्रयतपाणिः शरणं प्र पद्ये स्वस्ति संबाधेष्वभयं नो अस्तु २

( ८ ) [ ऋ० अ० ४-४-२९ ] [ ऋ० ५।८४ सूक्तस्यानन्तरम् । ]

वर्षन्तु ते विभावरि दिवो अभ्रस्य विद्युतः । रोहन्तु सर्वबीजा-न्यव ब्रह्मद्विषो जहि १

( ९ ) [ऋ०अ०४-४-३४] [ऋग्वेदस्य पञ्चममण्डलस्यान्ते । ]

आ ते गर्भो योनिमेतु पुमान् बाण इवेषुधिम् ।
आ वीरो जायतां पुत्रस्ते दशमास्यः १
करोमि ते प्राजापत्य-मा गर्भो योनिमेतु ते
अनूनः पूर्णो जायता-मश्लोणोऽपिशाचधीतः २
पुमांस्ते पुत्रो नारि तं पुमाननुजायताम् ।
तानि भद्राणि बीजा-न्यृषभा जनयन्ति नौ ३
यानि भद्राणि बीजा-न्यृषभा जनयन्ति नः ।
तैस्त्वं पुत्रान् विन्दस्व सा प्रसूर्धेनुका भव ४

---

सू० ५।१ ( ऋ० ५।३।२ ) 'तेन पासि०'। सू० ६ पाठभेदाः— १ [ निक्षिपेत्तत्प्रयत्नेन त्यक्तेऽन्यत्र भयावहम् । ( ऋग्विधाने )। १ तृणं हस्ते धृत्वा उदके निक्षिपेत् । ] यत् स्तृणैरध्ययनं तदधीतं स्तृणानि भव ते भव। सू० ७ पाठभेदाः- १ महादूभुतं । १ ०मयं च नो ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

कामः समृद्ध्यतां मह्य — मपराजितमेव मे ।
यं कामं कामये देव तं मे वायो समर्द्धय ५

( १० ) [ ऋ० अ० ४-४-३४ ] [ ऋग्वेदस्य पञ्चममण्डलस्यान्ते ।]

अग्निरैतु प्रथमो देवतानां सोऽस्यै प्रजां मुञ्चतु मृत्युपाशात् ।
तदयं राजा वरुणोऽनुमन्यतां यथेयं स्त्री पौत्रमघं न रोदात् १
इमामग्निस्त्रायतां गार्हपत्यः प्रजामस्यै नयतु दीर्घमायुः ।
अशून्योपस्था जीवतामस्तु माता पौत्रमानन्दमभि प्रबुद्ध्यतामियम् २
मा ते गृहे निशि घोष उत्था — दन्यत्र त्वद्रुदत्यः सं विशन्तु ।
मा त्वं विकेश्युर आवधिष्ठा जीवपत्नी पतिलोके विराज
पश्यन्ती प्रजां सुमनस्यमाना ३
अप्रजस्तां पौत्रमृत्युं पाप्मानमुत वाघम् ।
शीर्ष्णः स्रजमिवोन्मुच्य द्विषद्भ्यः प्रतिमुञ्चामि पाशम् ४
देवकृतं ब्राह्मणं कल्पमानं तेन हन्मि योनिषदः पिशाचान् ।
क्रव्यादो मृत्यूनधरान् पातयामि दीर्घमायुस्तव जीवन्तु पुत्राः ५

(११) [ ऋ० अ० ४-४-३४ ] [ ऋग्वेदस्य पञ्चममण्डलस्यान्ते ।]

॥ अथ श्रीसूक्तम् ॥

( ऋषयः– आनन्द–कर्दम–श्रीद–चिक्लीताः श्रीपुत्राः । देवता– श्रीरग्निश्च ।
छन्दः– अनुष्टुप्, ४ बृहती, ५–६ त्रिष्टुप्, १५ आस्तारपंक्तिः )

हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह १
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम् । यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् २
अश्वपूर्वां रथमध्यां हस्तिनादप्रमोदिनीम् । श्रियं देवीमुप ह्वये श्रीर्मा देवी जुषताम् ३
कां सोस्मितां हिरण्यप्राकारामार्द्रां ज्वलन्तीं तृप्तां तर्पयन्तीम् ।
पद्मेस्थितां पद्मवर्णां तामिहोप ह्वये श्रियम् ४
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम् ।
तां पद्मिनीमीं शरणं प्र पद्ये ऽलक्ष्मीर्मे नश्यतां त्वां वृणे ५ [१]

सू० ११ पाठभेदाः– १ ०स्रजम्; ममा वह । ३ अश्वपूर्णां; ०प्रबोधिनीम्, देवीर्जु० । ५ पद्मनेमिं, पद्मनेमीं, शरणमहं प्र०, वृणोमि ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

आदित्यवर्णे तपसोऽधि जातो वनस्पतिस्तव वृक्षोऽथ बिल्वः ।
तस्य फलानि तपसा नुदन्तु या अन्तरा याश्च बाह्या अलक्ष्मीः ६
उपैतु मां देवसखः कीर्तिश्च मणिना सह । प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्तिमृद्धिं ददातु मे ७
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम् । अभूतिमसमृद्धिं च सर्वां निर्णुद मे गृहात् ८
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम् ९
मनसः काममाकूतिं वाचः सत्यमशीमहि । पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः १० [२]

कर्दमेन प्रजा भूता मयि संभव कर्दम । श्रियं वासय मे कुले मातरं पद्ममालिनीम् ११
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे । नि च देवीं मातरं श्रियं वासय मे कुले १२
आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम् । चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह १३
आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम् । सूर्यां हिरण्मयीं लक्ष्मीं जातवेदो म आ वह १४
तां म आ वह जातवेदो लक्ष्मीमनपगामिनीम् ।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान् विन्देयं पुरुषानहम् १५ [३]

यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम् । सूक्तं पञ्चदशर्चं च श्रीकामः सततं जपेत् १६
पद्मानने पद्मविपद्मपत्रे पद्मप्रिये पद्मदलायताक्षि ।
विश्वप्रिये विष्णुमनोऽनुकूले त्वत्पादपद्मं मयि सं नि धत्स्व १७
पद्मानने पद्मऊरु पद्माक्षि पद्मसंभवे । तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम् १८
अश्वदायि गोदायि धनदायि महाधने । धनं मे जुषतां देवि सर्वकामांश्च देहि मे १९
पुत्रपौत्रधनं धान्यं हस्त्यश्वाश्वतरी रथम् । प्रजानां भवसि माता आयुष्मन्तं करोतु मे २०
धनमग्निर्धनं वायुर्धनं सूर्यो धनं वसुः । धनमिन्द्रो बृहस्पतिर्वरुणो धनमश्विना २१ [४]

वैनतेय सोमं पिब सोमं पिबतु वृत्रहा । सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः २२
न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः ।
भवन्ति कृतपुण्यानां भक्त्या श्रीसूक्तजापिनाम् । २३

---

६ मा यान्तरा०, ममान्तरा। ७ भूतःसु, ० भूतोऽस्तु, ०भूतोऽसि । ऋद्धिं, वृद्धिं । ११ मे गृहे । १२ स्रजन्तु, स्रजन्ति । १३ यष्करि० । यष्टीं, पुष्टीं० । पिङ्गलां पद्म०, चन्द्रां हिर० । ममा वह । १४, ०यष्टीं, पुष्करिणीं यष्टीं, यःकरिणीं यष्टिं, पुष्करिणीं पुष्टीं, पुष्करिणीं पुष्टिं । १५, लक्ष्मी मलप० । प्रभूतिं । १६ श्रियः पञ्च० । १८ पद्मासने पद्म । पद्मिनि पद्मपात्रे० । १९ अश्वदायै च गौदाये धनदायै, लभतां । २० हस्त्यश्वादिगवेडकम् । करोतु मां । २१ वरुणं धनमस्तु मे, वरुण धनममस्तु ते, ०धनमश्नुते । २२ मह्यं । २३ श्रीसूक्तजपकारिणाम्; भक्तानां श्रीसूक्तं जपेत् ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

सरसिजनिलये सरोजहस्ते धवलतरांशुकगंधमाल्यशोभे ।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि प्रसीद मह्यम् २४
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम् । लक्ष्मीं प्रियसखीं भूमिं नमाम्यच्युतवल्लभाम् २५
महालक्ष्म्यै च विद्महे विष्णुपत्न्यै च धीमहि । तन्नो लक्ष्मीः प्रचोदयात् २६
आनंदः कर्दमः श्रीदश्चिक्लीत इति विश्रुताः । ऋषयः श्रियः पुत्राश्च श्रीर्देवीर्देवता मताः २७
ऋणरोगादिदारिद्र्यपापक्षुदपमृत्यवः । भयशोकमनस्तापा नश्यन्तु मम सर्वदा २८ [५]
श्रीवर्चस्वमायुष्यमारोग्यमाविधाच्छोभमानं महीयते ।
धनं धान्यं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः २९

॥ इति श्रीसूक्तम् ॥ ×

---

२४ धवलतरा । शुभगन्धमाल्यशोभे, ०शुकगन्धमाल्यशो(शु)भे । ०भूतिकरी । २५ विष्णोः प्रिय० । २६ महादेव्यै । २७ मा विधाच्छुभमानं, ०माविधाच् शुभमानं । २८ आनन्दकर्दमश्रीदचि० । २९ रोगशोक० ।

× श्रीसूक्तस्यान्ते एते श्लोकाः केषुचित्पुस्तकेषु दृश्यन्ते—

( १ )

विश्वेश्वर विरूपाक्ष विश्वरूप सदाशिव । शरणं भव भूतेश करुणाकर शंकर १
हर शंभो महादेव विश्वेशामरवल्लभ । शिव शंकर सर्वात्मन् नीलकंठ नमोऽस्तु ते २
मृत्युंजयाय रुद्राय नीलकंठाय शंभवे । अमृतेशाय शर्वाय महादेवाय ते नमः ३
एतानि शिवनामानि यः पठेन्नियतः सकृत् । नास्ति मृत्युभयं तस्य पापरोगादि किंचन ४

( २ )

यज्ञेशाच्युत गोविन्द माधवानन्त केशव । कृष्ण विष्णो हृषीकेश वासुदेव नमोऽस्तु ते १
कृष्णाय गोपिनाथाय चक्रिणे मुरवैरिणे । अमृतेशाय गोपाय गोविन्दाय नमो नमः २
एतान्यनन्तनामानि मण्डलान्ते ( सदा ) पठेत् । ३

( ३ )

वासनाद् वासुदेवोऽसि वासितं ते जगत्त्रयं । सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तु ते १
दश सप्त च नामानि मण्डलान्तेषु यः पठेत् । स शिवस्य पदं गत्वा शिवलोके महीयते २

एतानि शिवनामानि मण्डलान्ते सकृत्पठेत् ।
( १ ) ३ श्रीमहादेवाय० ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

( १२ ) [ऋ० अ० ४-७-२०] [ऋ० मं० ६।४४ सूक्तस्यानन्तरम् ।]

चक्षुश्च श्रोत्रं च मनश्च वाक् चं प्राणापानौ देह इदं शरीरम् ।
द्वौ प्रत्यञ्चावनुलोमौ विसर्गावेतं तं मन्ये दशयन्त्रमुत्सम् १
नखश्च पृष्ठश्च करौ च बाहू जंघे चोरू उदरं शिरश्च ।
रोमाणि मांसं रुधिरास्थिमज्जमेतच्छरीरं जलबुद्बुदोपमम् २
भ्रुवौ ललाटे च तथा च कर्णौ हनू कपोलौ छुबुकस्तथा च ।
ओष्ठौ च दन्ताश्च तथैव जिह्वा मे तच्छरीरं मुखरत्नकोशम् ३

( १३ ) [ऋ० अ० ४-८-४] [ऋ० मं० ६।४८ सूक्तस्यानन्तरम् ।]

सूक्तान्तेऽस्येत्तृणान्यग्ना—विरिणे वोदकेऽपि वा । यदुस्तृणैरधीतं तत् तृणानि भवति ध्रुवम् १
वापीकूपतडागानां समुद्रं गच्छ स्वाहा [ अग्निं गच्छ स्वाहा ] २

(१४) [ऋ० अ० ५-३-३०] [ऋ० मं० ७।३५ सूक्तस्यानन्तरम् ।]

शंवतीः पारयन्त्येते तं पृच्छन्ति वचो युजा । अभ्यारं तं यमाकेतुं य एवेदमिति ब्रवन् १
भासाकेतुं परिस्रुतं भारतीर्ब्रह्मवर्धनीः । संजानाना मही माता य एवेदमिति ब्रवत् २
इन्द्रस्तं किं विभुं प्रभुं भानुनेयं सरस्वतीम् । येन सूर्यमरोचय—द्येनेमे रोदसी उभे ३
जुषस्वाग्ने अङ्गिरः काण्वं मेध्यातिथिम् । मा त्वा सोमस्य बर्बृहत् सुतस्य मधुमत्तमः ४
त्वमग्ने अङ्गिरः शोचस्व देववीतमः । आ शंतम शंतमाभि—रभिष्टिभिः शान्तिः स्वस्तिमकुर्वत ५
शं नः कनिक्रदद् देवः पर्जन्यो अभि वर्षतु ।
शं नो द्यावापृथिवी शं प्रजाभ्यः शं न एधि द्विपदे शं चतुष्पदे ६

( १५ ) [ऋ० अ० ५-४-२२] [ऋ० मं० ७।५५ सूक्तस्यानन्तरम् ।]

स्वप्न स्वप्नाधिकरणे सर्वं नि ष्वापया जनम् । आसूर्यमन्यान् त्स्वापया—व्युषं जागृयामहम् १
अजगरो नाम सर्पः सर्पिरविषो महान् । तस्मिन् हि सर्पः सुधित—स्तेन त्वा स्वापयामसि २
सर्पः सर्पो अजगरः सर्पिरविषो महान् । तस्य सर्पात् सिन्धव—स्तस्य गाधमशीमहि ३

---

सू० १२ पाठभेदाः- १ उरश्च पृष्ठीश्च, उरश्च पृष्ठश्च, उरश्च पृष्टिश्च । लोमानि । ३ हनुः ।

सू० १३ पाठभेदाः- १ यस्तृणैरध्ययनं तदधीतिं ०, यस्तृणैरध्ययनस्तदधीतं स्तृणानि भवते भव । स्तृणाम्य ० । यत् स्तृणैरध्ययनं० । सूक्तान्ते स्तृणान्यग्नौ० ॥ २ ॥ ( पश्य षष्ठं परिशिष्टम् )

सू० १४ पाठभेदाः- १ ०यन्त्येतं तं, यन्त्येतदं । अभ्यारं सं । ब्रवत् । २ पुरुस्पृहं । ३ सरस्वती । ५ शांति स्व०; शांतिं स्व० ।

सू० १५ पाठभेदाः- १ स्वप्नः, यामिनं । ०व्युषं यद्यपू१ल्हं । ३ यस्य शुष्कात्सिंधव ० ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

काळिको नाम सर्पो नवनागसहस्रबळः । यमुनह्रदे ह सो जातो यो नारायणवाहनः ४
यदि क्काळिकदूतस्य यदि काःकाळिकाद्भयात् ।
जन्मभूमिमतिक्रान्तो निर्विषो याति काळिकः ५
आ याहीन्द्र पथिभिरीळितेभि—र्यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जहुर्मातुळस्येव योषा भागस्ते पैतृष्वसेयीं वपामिव ६
यशस्करं बलवन्तं प्रभुत्वं तमेव राजाधिपतिर्बभूव ।
संकीर्णनागाश्वपतिर्नराणां सुमंगल्यं सततं दीर्घमायुः ७
कर्कोटको नाम सर्पो यो दृष्टीविष उच्यते । तस्य सर्पस्य सर्पत्वं तस्मै सर्प नमोऽस्तु ते ८
येऽदो रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नमः ९×
या इषवो यातुधानानां ये वा वनस्पतीननु । ये वावटेषु शेरते तेभ्यः सर्पेभ्यो नमः १०
नमो अस्तु सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ११
उग्रायुधाः प्रमतिनः प्रवीरा मायाविनो बलिनो मिच्छमानाः ।
ये देवानसुराः पराभवन् तांस्त्वं वज्रेण मघवन् निवारय १२

( १६ ) [ऋ०अ०५।६।२०] [ऋ० मं० ७।९६ सूक्तस्यानन्तरम् ।]

यस्य व्रतं पशवो यन्ति सर्वे यस्य व्रतमुपतिष्ठन्त आपः ।
यस्य व्रते पुष्टिपतिर्निविष्ट—स्तं सरस्वन्तमवसे हुवेम १

( १७ ) [ऋ०अ०५।७।४] [ऋ० मं० ७।१०३ सूक्तस्यानन्तरम् ।]

उपप्लवत मण्डूकि वर्षमा वद तादुरि । मध्ये ह्रदस्य प्लवस्व निगृह्य चतुरः पदः १

( १८ ) [ऋ०अ० ७।२।१८] [ऋ०मं० ९।६७ सूक्तस्यानन्तरम् ।]

पावमानीः स्वस्त्ययनीः सुदुघा हि घृतश्चुतः । ऋषिभिः संभृतो रसो ब्राह्मणेष्वमृतं हितम् १
पावमानीर्दिशन्तु न इमं लोकमथो अमुम् । कामान् त्समर्धयन्तु नो देवीर्देवैः समाहिताः २
येन देवाः पवित्रेणा—त्मानं पुनते सदा । तेन सहस्रधारेण पावमान्यः पुनन्तु माम् । ३

---

४ यामुनहृदे संजातो ह । ५ काकाळिकाद्भयात्, काकाळिकाद्भयम्, काःकाळिकाद्भयम् । ० भूमिपरिक्रान्तो ।
× ९-११ ये वामी ( वा० य० १३-८, ७, ६ ) । ( १६ ) १ [ श्रौ० सू० पू० अ० ३।८ ]
सू० १७ पाठभेदाः- १ उपप्लवद । मण्डूकी । प्लवस्य । विगृह्य । परः ।
सू० १८ पाठभेदाः- २ म इमं । देवैर्देवीः । ३ सहस्रेण धारेण ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

प्राजापत्यं पवित्रं शतोद्यामं हिरण्मयम् । तेन ब्रह्मविदो वयं पूतं ब्रह्म पुनीमहे ४

इन्द्रः पुनीती सह मा पुनातु सोमः स्वस्त्या वरुणः समीच्या ।
यमो राजा प्रमृणाभिः पुनातु मा जातवेदा मूर्जयन्त्या पुनातु ५

ऋषयस्तु तपस्तेपुः सर्वे स्वर्गजिगीषवः । तपन्तस्तपसोग्रेण पावमानीरृचोऽब्रुवन् ६ [१]

यन्मे गर्भे वसतः पापमुग्रं यज्जायमानस्य च किञ्चिदन्यत् ।
जातस्य च यच्चापि च वर्धतो मे तत् पावमानीभिरहं पुनामि ७

मातापित्रोर्यन्न कृतं वचो मे यत् स्थावरं जङ्गममाबभूव ।
विश्वस्य तत् प्रहृषितं वचो मे तत् पावमानीभिरहं पुनामि ८

गोघ्नात् तस्करत्वात् स्त्रीवधाद्यच्च किल्बिषम् ।
पापकं च चरणेभ्यस् तत् पावमानीभिरहं पुनामि ९

ब्रह्मवधात् सुरापानात् स्वर्णस्तेयाद् वृषलिगमनमैथुनसंगमात् ।
गुरोर्दाराधिगमनाच्च तत् पावमानीभिरहं पुनामि १०

बालघ्नान्मातृपितृवधाद्भूमितस्करात् सर्ववर्णगमनमैथुनसंगमात् ।
पापेभ्यश्च प्रतिग्रहात् सद्यः प्रहरति सर्वदुष्कृतं तत् पावमानीभिरहं पुनामि ११

क्रयविक्रयाद्योनिदोषाद् भक्षाद्भोज्यात् प्रतिग्रहात् ।
असंभोजनाच्चापि नृशंसं तत् पावमानीभिरहं पुनामि १२

दुर्यष्टं दुरधीतं पापं यच्चाज्ञानतो कृतम् ।
अयाजिताश्चासंयाज्यास् तत् पावमानीभिरहं पुनामि १३

अमन्त्रमन्नं यत् किंचि—द्धूयते च हुताशने ।
संवत्सरकृतं पापं तत् पावमानीभिरहं पुनामि १४

ऋतस्य योनयोऽमृतस्य धाम विश्वा देवेभ्यः पुण्यगन्धाः ।
ता न आपः प्र वहन्तु पापं शुद्धा गच्छामि सुकृतामु लोकं तत् पावमानीभिरहं पुनामि १५[२]

पावमानीः स्वस्त्ययनी—र्याभिर्गच्छति नान्दनम् ।
पुण्यांश्च भक्षान् भक्षय—त्यमृतत्वं च गच्छति १६

पावमानीः पितॄन् देवान् ध्यायेद्यश्च सरस्वतीम् । पितॄंस्तस्योप वर्तेत क्षीरं सर्पिर्मधूदकम् १७

---

५ सुनीती, पुनीहि । मां । मोर्जयन्त्या, ऊर्जयन्त्या । १० वृषळि(ली)गमन० । १० दाराद्धि ग०, दाराभिग० । १७ पावमानीः, पावमानीं, पावमानं । ऋषींस्तस्योप तिष्ठे० ।



CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

पावमानं परं ब्रह्म शुक्रं ज्योतिः सनातनम्। ऋषींस्तस्योप तिष्ठेत क्षीरं सर्पिर्मधूदकम् १८
पावमानं परं ब्रह्म ये पठन्ति मनीषिणः। सप्त जन्म भवेद्विप्रो धनाढ्यो वेदपारगः १९
दशोत्तराण्यृचांश्चैव पावमानीः शतानि षट्। एतज्जुह्वन्जपेन् मन्त्रं घोरमृत्युभयं हरेत् २०
एतत्पुण्यं पापहरं रोगमृत्युभयापहम्। पठतां शृण्वतां चैव ददाति परमां गतिम्। २१[३]

( १९ ) [ऋ०अ०६।७।२०] [ऋ०मं०९।३।५ मन्त्रस्यानन्तरम्]

इळैव वामनु वस्तां घृतेन यस्याः पदे पुनते देवयन्तः।
घृतपदी शक्वरी सोमपृष्ठो—प यज्ञमस्थित वैश्वदेवी १
वैश्वदेवी पुनती देव्या गा—द्यस्यामिमा बह्व्यस्तन्वो वीतपृष्ठाः।
तया मदन्तः सधमादेषु वयं स्याम पतयो रयीणाम् २

( २० ) [ऋ०अ०७।५।२८] [ऋग्वेदस्य नवममण्डलस्यान्ते।]

यत्र तत् परमं पदं विष्णोर्लोके महीयते।
देवैः सुकृतकर्मभि—स्तत्र मामसृतं कृधी—न्द्रायेन्दो परि स्रव १
यत्र तत् परमाप्यं भूतानामधिपतिम्।
भावभावी च योगींश्च तत्र माममृतं कृधी—न्द्रायेन्दो परि स्रव २
यत्र लोकास्तनूत्यजः श्रद्धया तपसा जिताः।
तेजश्च यत्र ब्रह्म च तत्र माममृतं कृधी—न्द्रायेन्दो परि स्रव ३
यत्र देवा महात्मानः सेन्द्राश्च समरुद्गणाः।
ब्रह्मा च यत्र विष्णुश्च तत्र माममृतं कृधी—न्द्रायेन्दो परि स्रव ४
यत्र गंगा च यमुना च यत्र प्राची सरस्वती।
यत्र सोमेश्वरो देव—स्तत्र माममृतं कृधी—न्द्रायेन्दो परि स्रव ५
यत्र तद्विष्णुर्महीयते नराणामधिपतिम्।
यत्र शङ्खचक्रगदाधरस्मरणं मुक्तिश्च तत्र माममृतं कृधी—न्द्रायेन्दो परि स्रव ६

( २१ ) [ऋ०अ०७।६।५] [ऋ०मं० १०।९ सूक्तस्यानन्तरम्]

ससृपीस्तदपसो दिवा नक्तं च ससृपीः। वरेण्यक्रतूरहमा देवीरवसे हुवे १

१८ पितॄंस्तस्योप वर्ते। १९ सप्तजन्मा। २० ०ण्यृचश्चैव; घोरं मृ०। सू० १९ पाठभेदाः-- १ इनैव। पदेषु न। ०पृष्ठो। सू० २० पाठभेदाः- २ ०माव्यं। भूतानामधिपतिः, देवानामधिपतिं, भूतानामधिपतिं। भावभावि। च योगी च, वयो गीश्च। ३ त्यजाः। ब्रह्मा। ४ ब्रह्म च। [१९।२] ( वा० य० १९।४४ )

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

( २२ ) [ऋ०अ०८।३।६] [ऋ० १०।७५।५ मन्त्रस्यानन्तरम् ।]

सितासिते सरिते यत्र संगथे तत्रांपुतासो दिवमुत्पतन्ति ।
ये वै तन्वं१ वि सृजन्ति धीरा—स्ते जनासो अमृतत्वं भजन्ते १

( २३ ) [ऋ०अ०८।३।२८] [ऋ०मं० १०।८५ सूक्तस्यानन्तरम् ।]

अविधवा भव वर्षाणि शतं सांग्रं तु सुव्रंता । तेजस्वी च यशस्वी च धर्मपत्नी पतिव्रंता १
जनयद्बहुपुत्राणि मा च दुःखं लभेत् क्वचित् । भर्ता ते सोमपा नित्यं भवेद्धर्मपरायणः २
अष्टपुत्रा भव त्वं च सुभगा च पतिव्रंता । भर्तुश्चैव पितुर्भ्रातु हृदयानंदिनी सदा ३
इन्द्रस्य तु यथेन्द्राणी श्रीधरस्य यथा श्रिया । शंकरस्य यथा गौरी तद्वद्भर्तुरपि भर्तरि ४
अत्रेर्यथानुसूया स्याद् वसिष्ठस्याप्यरुन्धती । कौशिकस्य यथा सती तथा त्वमपि भर्तरि५
ध्रुवैधि पोष्या मयि मह्यं त्वादाद्बृहस्पतिः । मया पत्या प्रजावती सं जीव शरदः शतम् ६

( २४ ) [ऋ०अ०८।५।२३] [ऋ०मं०१०।१०३ सूक्तस्यानन्तरम् ।]

असौ या सेना मरुतः परेषाम—भ्यैति न ओजसा स्पर्धमाना ।
तां गूहत तमसापव्रतेन यथामीषांमन्यो अन्यं न जानात् १
अन्धा अमित्रा भवता—शीर्षाणा अहंय इव ।
तेषां वो अग्निदंग्धाना—मग्निमूळ्हानामि—न्द्रो हन्तु वरंवरम् २

( २५ ) [ऋ०अ०८।६।२] [ऋ०मं० १०।१०६ सूक्तस्यानन्तरम् ।]

हविर्भिरेके स्वरितः सचन्ते सुन्वन्त एके सवनेषु सोमान् ।
शचीर्मदन्त उत दक्षिणाभि—र्नेज्जिह्मायन्त्यो नरके पताम १

( २६ ) [ऋ०अ०८।७।१४] [ऋ०मं० १०।१२७ सूक्तस्यानन्तरम् ।]

॥ अथ रात्रीसूक्तम् ॥

आ रात्रि पार्थिवं रजः पितरः प्रायु धामभिः ।
दिवः सदांसि बृहती वि तिष्ठस आ त्वेषं वर्तते तमः १
ये ते रात्रि नृचक्षसो युक्तासो नवतिर्नव । अशीतिः संत्वष्टा उतो ते सप्त सप्ततीः २
रात्रीं प्र पद्ये जननीं सर्वभूतनिवेशनीम् । भद्रां भगवतीं कृष्णां विश्वस्य जगतो निशाम् ३

सू० २२ पाठभेदाः-- १ सरितो । संगते ।
सू० २३ पाठभेदः- ३ ०नंदनी । [सू० २४] १ यथामीषा अन्यो । १ [ अथ० ३।२।६; वा० य० १७।४७; साम० १८६० ] २ [ अथ० ६।६७।२; साम० १८७१ ] [सू०२५] नरकं । सू० २६पाठभेदाः- १ पितुरः प्रायि, पितरप्रायु, पितुरप्रायि, पितुरः प्रायु, । २ सन्त्यष्टा। सप्ततिः, सप्तति । ३ दिशां ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

संवेशिनीं संयमिनीं ग्रहनक्षत्रमालिनीम् ।
प्रपन्नोऽहं शिवां रात्रीं भद्रे पारमशीमहि [भद्रे पारमशीमह्यों नमः] ४
स्तोष्यामि प्रयतो देवीं शरण्यां बह्वृचप्रियाम् ।
सहस्रसंमितां दुर्गां जातवेदसे सुनवाम सोमम् ५ [१]

शान्त्यर्थं तद् द्विजातीनामृषिभिः सोमपाश्रिताः ।
ऋग्वेदे त्वं समुत्पन्नाऽरातीयतो नि दहाति वेदः ६
ये त्वां देवि प्र पद्यन्ति ब्राह्मणा हव्यवाहनीम् ।
अविद्या बहुविद्या वा स नः पर्षदति दुर्गाणि विश्वा ७
ये अग्निवर्णां शुभां सौम्यां कीर्तयिष्यन्ति ये द्विजाः ।
तांस्तारयति दुर्गाणि नावेव सिन्धुं दुरितात्यग्निः ८

दुर्गेषु विषमे घोरे संग्रामे रिपुसंकटे । अग्निचोरनिपातेषु दुष्टग्रहनिवारिणि ९
दुर्गेषु विषमेषु त्वं संग्रामेषु वनेषु च ।
मोहयित्वा प्र पद्यन्ते तेषां मे अभयं कुरु [तेषां मे अभयं कुर्वों नमः ] १०[२]
केशिनीं सर्वभूतानां पञ्चमीति च नाम च ।
सा मां समा निशा देवी सर्वतः परि रक्षतु [सर्वतः परि रक्षत्वों नमः] ११

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्र पद्ये सुतरसि तरसे नमः सुतरसि तरसे नमः १२
दुर्गा दुर्गेषु स्थानेषु शं नो देवीरभिष्टये । य इमं दुर्गास्तवं पुण्यं रात्रौरात्रौ सदा पठेत् १३

[ रात्रिः कुशिकः सोभरो रात्रिर्वा भारद्वाजो रात्रिस्तवो गायत्री । ]

रात्रीसूक्तं जपेन्नित्यं तत्कालमुपपद्यते ।
न योनिं पुनरायाति सर्वपापैः प्रमुच्यते । १४

सू० २६ पाठभेदाः— ४ संवेशनीं, संयमनीं । गृह० । ६ समुपाश्रिताः । ७ त्वां देव । प्रपद्यन्ते? सा नः । ८ अग्निवर्णा सोम्यां । ९ ०दुष्टग्रहनिवारेण, ०षु सर्वग्रहनिवारणे, अग्निचोरनिपाते च सर्वग्रह-निवारेण (रिणि) सर्व (दुष्ट) ग्रहनिवार (रि) ण्यों नमः । १० त्वां? कृणु; तषां मे अभयं कुर्वों (कृण्वों)नमः । ११ नामुत । समां दिशां देवीं देवी । १३ युग्यं । रात्रीसूक्तं जपेत्सदा । १४ रात्रिः कुशिकः सौभरो रात्रिस्तवो गायत्री, रात्रि कुशिकं सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रं; रात्रिः कुशिकसोभरो रात्रिस्तवो गायत्री । तत्काल उपपद्यते ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

क्षीरेण स्नापिता दुर्गा चन्दनेन विलेपिता
बिल्वपत्रकृतापीडा नमो दुर्गे नमो नमः १५ [३]

सर्वभूतपिशाचेभ्यः सर्वसर्पसरीसृपैः ।
देवेभ्यो मानुषेभ्यश्च उभयेभ्योऽभिरक्ष माम् १६
या ऋग्वेदे स्तुता देवी काश्यपेन उदाहृता ।
जातवेदप्रभां गौरी जातवेदसे सुनवाम सोमम् १७
सुरासुरैर्द्विजवरैः पिशाचोरगराक्षसैः ।
अरातिभयं उत्पन्ने अरातीयतो नि दहाति वेदः १८
गजद्वारेऽपथे घोरे संग्रामेषु च गौतमी ।
सर्वं रक्षतु दुरितं स नः पर्षदति दुर्गाणि विश्वा १९
महाभये समुत्पन्ने स्मरन्ति च जपन्ति च ।
सर्वं तारयते दुर्गा नावेव सिन्धुं दुरितात्यग्निः २० [४]

य इमं दुर्गास्तवं पुण्यं शृण्वन्ति च जपन्ति च ।
त्रिषु लोकेषु विख्यातं त्रिषु लोकेषु पूजितम् २१
अपुत्रो लभते पुत्रान् धनहीनो धनं लभेत् ।
अचक्षुर्लभते चक्षुर्बद्धो मुच्येत बन्धनात् २२
व्याधितो मुच्यते रोगाद्रोगी श्रियमाप्नुयात् ।
ददाति कामितं सर्वं कात्यायनि नमोऽस्तु ते २३ [५]

[ उलूकयातुं शुशुलूकयातुं जहि श्वयातुमुत कोकयातुम् ।
सुपर्णयातुमुत गृध्रयातुं दृषदेव प्रमृण रक्ष इंद्र [ऋ० मं० ७।१०४।२२] १
पिशंगभृष्टिमम्भृणं पिशाचिमिन्द्र सं मृण । सर्वं रक्षो निबर्हय ] [ऋ० मं० १।१३३।५] २

( २७ ) [ऋ०अ०८।७।१६] [ऋ०मं०१०।१२८सूक्तस्यानन्तरम् ।]

११ सनक-सनन्दन-सनातनादयः । हिरण्यम् । अनुष्टुप्; ५, ८-९ त्रिष्टुप्, ७ अतिशक्वरी, ११ जगती ।

आयुष्यं वर्चस्यं रायस्पोषमौद्भिदम् । इदं हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम् १
उच्चैर्वाजि पृतनाषाट् सभासाहं धनंजयम् ।
सर्वाः समग्रा ऋद्धयो हिरण्येऽस्मिन् समाहिताः २

[ उलूकयातु० १-२ इमौ मन्त्रौ ऋग्वेदस्थौ खिलेषु गणयितुं न योग्यौ । ]
सू० २७ पाठभेदाः- १ विशतादु मां० । ( वा० य० ३४।५०) २ ःसमाहिताः ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

शुनमहं हिरण्यस्य पितुर्नामेव जग्रभं । तेन मां सूर्यत्वच — मकरं पूरुषु प्रियम् ३

सम्राजं च विराजं चा — भिष्टिर्या च मे ध्रुवा ।

लक्ष्मी राष्ट्रस्य या मुखे तया मामिन्द्र सं सृज ४

अग्नेः प्रजातं परि यद्धिरण्य — ममृतं यज्ञे अधि मर्त्येषु ।

य एनद्वेद स इदेनमर्हति जरामृत्युर्भवति यो बिभार्ति ५ [१]

यद्वेद राजा वरुणो यदु देवी सरस्वती । इन्द्रो यद्वृत्रहा वेद तन्मे वर्चस आयुषे ६

न तद्रक्षांसि न पिशाचास्तरन्ति देवानामोजः प्रथमजं ह्येतत् ।

यो बिभार्ति दाक्षायणा हिरण्यं स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः ७

यदाबध्नन् दाक्षायणा हिरण्यं शतानीकाय सुमनस्यमाना ।

तन्न आ बध्नामि शतशारदाया — युष्मान् जरदष्टिर्यथासत् ८

घृतादुल्लुप्तं मधुमत्सुवर्णं धनंजयं धरुणं धारयिष्णु ।

ऋणक् सपत्नादधरांश्च कृण्वदा — ऽऽरोह मां महते सौभगाय ९

प्रियं मा कुरु देवेषु प्रियं राजसु मा कुरु । प्रियं विश्वेषु गोप्त्रेषु मयि धेहि रुचा रुचम् १०

अग्निर्येन विराजति सूर्यो येन विराजति ।

विराज्येन विराजति तेनास्मान् ब्रह्मणस्पते विराज समिधं कुरु ११ [२]

( २८ ) [ऋ० अ० ८।७।१६] [ऋ० मं० १।१२८ सूक्तस्यानन्तरम्]

( विहव्य आंगिरसः । इन्द्रः । जगती । )

अर्वाञ्चमिन्द्रममुतो हवामहे यो गोजिद्धनजिदश्वजिद्यः ।

इमं नो हव्यं विहवे जुषस्वा — ऽस्म कुल्मो हरिवो मेदिनं त्वा १

( २९ ) [ऋ० अ० ८।७।१६] [ऋ० मं० १०।१२८ सूक्तस्यानन्तरम्]

यां कल्पयन्ति नोऽरयः क्रूरां कृत्यां वधूमिव ।

तां ब्रह्मणाप निर्णुद्मः प्रत्यक्कर्तारमृच्छतु १

शीर्षण्वतीं कर्णवतीं विषुरूपां भयंकरीम् ।

यः प्राहिणोद्विहाद्य त्वां वि तं त्वं योजयासुभिः २

---

[२७] ३ हिरण्यस्यापितुर्मानेव, । ०र्नामेव । पुरुषप्रियं । ५ इदेयमर्हति, इदेनमर्हति, इवेदमर्हति, इदेनदर्हति । ७ दाक्षायणं हिरण्यं । ( वा० य० ३४।५१ ) ८ ०मानाः । तन्म आ, तत्ते, तदा । यथासन्, ०सन्,० सत् वा, यथासम् । (वा० य० ३४।५२) ९ घृतादुल्लुप्तं, घृतादुल्लुप्तं । सपत्नानध० । ( अथ० १९।६२।१ ) १० गोत्रेषु । ११ विराड्येन । [ तै० सं० ४।७।१४।४; तै० ब्रा० २।४।३।३ ]

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

येन दिष्टेह वहसि प्रतिकूलमघायिनि ।
तमेवेतो निवर्तस्व मास्मान् मृच्छो अनागसः ३
अभिवर्तस्व कर्तारं निरस्तास्माभिरोजसा ।
आयुरस्य निकृन्तस्व प्रजां च पुरुषादिनि ४
यस्त्वा कृत्ये चकारेह तं त्वं गच्छ पुनर्नवे ।
अरातीः कृत्ये नाशय सर्वांश्च यातुधान्यः ५ [१]

क्षिप्रं कृत्ये निवर्तस्व कर्तुरेव गृहान् प्रति ।
पशूंश्चैवास्य नाशय वीरांश्चास्य नि बर्हय ६
यस्त्वा कृत्ये प्रजिघाय विद्वाँ अविदुषो गृहान् ।
तस्यैवेतः परेत्याशु तनुं कृधि परुष्परुः ७
प्रतीचीं त्वापसेधतु ब्रह्म रोचिष्णवमित्रहा ।
अग्निश्च कृत्ये रक्षोहा रिप्रहा चाज एकपात् ८
यथा त्वाङ्गिरसः पूर्वे भृगवश्चाप सेधिरे ।
अत्रयश्च वसिष्ठाश्च तथैव त्वाप सेधिम ९
यस्ते परूंषि सन्दधौ रथस्येव विभुर्धिया ।
तं गच्छ तत्र तेऽयन मज्ञातस्ते अयं जनः १० [२]

यो नः कश्चिद्व्रणस्थो वा कश्चिद्वान्योऽभि हिंसति ।
तस्य त्वं द्रोरिवेद्धोऽग्नि स्तनूमृच्छस्व हेळिता ११
भवाशर्वा देवहेळे मस्यत पापकृत्वने ।
हरस्वती त्वं च कृत्ये मोच्छिषस्तस्य किंचन १२
यो नः कश्चिद्दुहाराति र्मनसा प्रतिभूषति ।
दूरस्थो वान्तिकस्थो वा तस्य हृद्यमसृक् पिब १३
येनासि कृत्ये प्रहिता दूढ्यैनास्मज्जिघांसया ।
तस्य व्यानच्चाव्यानच्च हिनस्तु हरसाशनिः १४
ये नः शिवासः पन्थानः परायन्ति परावतम् ।
तैर्दीवि रात्र्याः कृत्या नो गमयस्वानुकृत्तये १५ [३]

यदि वैषि द्विपद्यस्मान् यदि वैषि चतुष्पदी ।
निरस्तेतो व्रजास्माभिः कर्तुरष्टापदी गृहान् १६

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

यो नः शपादशपतो यश्च नः शपतः शपात् ।
वृक्षमिव विद्युदाशु तमामूलादनु शोषय १७
यं द्विष्मो यश्च नो द्वेष्ट्यघायुर्यश्च नः शपात् ।
शुने पिष्टमिव क्षामं तं प्रत्यस्य स्वमृत्यवे १८
यश्च सापत्नः शपथो यश्च यामीं शपाति नः ।
ब्रह्मा च यत् क्रुद्धः शपात् सर्वं तत् कृध्यधस्पदम् १९
सबन्धुश्चाप्यबन्धुश्च यो अस्माँ अभि दासति ।
तस्य त्वं भिन्ध्यधिष्ठायं पद्मा विस्फूर्य तच्छिरः २० [४]

अभि प्रेहि सहस्राक्षं युक्त्वा तु शपथं रथे ।
शत्रूनन्विच्छती कृत्ये वृकीवाविमतो गृहान् २१
परि णो वृङ्धि शपथान् दहन्नग्निरिव ह्रदम् ।
शत्रूनेवाभितो जहि दिव्या वृक्षमिवाशनिः २२
शत्रून् मे प्रोथ शपथात् कृत्याश्च सुहृद्वोऽसुहृत् ।
जिह्वाः श्लक्ष्णाश्च दुर्हृदः समिद्धं जातवेदसम् २३
असपत्नं पुरस्तान्नः शिवं दक्षिणतः कृधि ।
अभयं सततं पश्चात् भद्रमुत्तरतो गृहे २४
परेहि कृत्ये मा तिष्ठ विद्धस्येव पदं नय ।
मृगस्य हि मृगारिप्रो न त्वा नीकर्तुमर्हति २५ [५]

अघ्न्यास्येव घोररूपे विषुरूपेऽविनाशिनि ।
जृम्भिता प्रतिगृभ्णीष्व स्वयमादाय चाद्भुतम् २६
त्वमिन्द्रो यमो वरुण स्त्वमापोऽग्निरथानिलः ।
त्वं ब्रह्मा चैव रुद्रश्च त्वष्टा चैव प्रजापतिः २७
आवर्तध्वं निवर्तध्व मृतवः परिवत्सराः ।
अहोरात्राश्चाब्दाश्च त्वं दिशः प्रदिशश्च मे २८
त्वं यमं वरुणं सोमं त्वमापोऽग्निमथानिलम् ।
अत्राहृत्य पशूंश्चैव मुत्पादयसि चाद्भुतम् २९
ये मे दमे दारुगर्भे शयानं धिया सहितं पुरुषं निजघ्नुः ।
कुम्भीपाकं नरकं ग्रीवबद्धं हता एवं पुरुषासो यमस्य ३० [६]

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

अभ्यक्ताक्ता स्वलङ्कृता सर्वं नो दुरितं दह ।
ज्ञानीथाश्चैवं कृत्यानां कर्तॄन् नृन् पापचेतसः ३१
यथा हन्ति पुरासीनं तथैवेष्वा सुकृन्नरः ।
तथा त्वया युजा वयं निकृणम स्थास्नु जङ्गमम् ३२
उत्तिष्ठैव परेहीतो ऽज्ञाति किमिहेच्छसि ।
ग्रीवास्ते कृत्ये पादौ चा—ऽभि कर्त्स्यामि विद्रव ३३
स्वायसाः सन्ति नोऽसयो विद्म चैव परूंषि ते ।
तैस्ते निकृणमस्तान्युग्रे यदि नो जीवयस्वरीन् ३४
मास्योच्छिषो द्विपदं मोत किञ्चिच्चतुष्पदम् ।
मा ज्ञातीननुजान् पूर्वान् मा वेशि प्रतिवेशिनौ ३५ [७]

शत्रूयता प्रहितासि दूढ्येनाभि यथायतः ।
ततस्तथा त्वा नुदतु योऽयमन्तर्मयि श्रितः ३६
एवं त्वं निकृतास्माभि—र्ब्रह्मणा देवि सर्वशः ।
यथेतमाश्रिता गत्वा पापधीनिव नो जहि ३७
यथा विद्युद्धतो वृक्ष आमूलादनु शुष्यति ।
एवं स प्रतिशुष्यतु यो मे पापं चिकीर्षति ३८
यथा प्रतिशुको भूत्वा तमेव प्रतिधावति ।
पापं तमेवं धावतु यो मे पापं चिकीर्षति ३९
यो नः स्वो अरणो यश्च निष्ट्यो जिघांसति ।
देवास्तं सर्वे धूर्वन्तु ब्रह्म वर्म ममान्तरम् + ४० [८]

उत्त्वा मन्दन्तु स्तोमाः कृणुष्व राधो अद्रिवः । अव ब्रह्मद्विषो जहि ४१
कुबेर ते मुखं रौद्रं नन्दिन्नानन्दमावह ।
ज्वरमृत्युभयं घोरं विश नाशय मे ज्वरम् ४२
यो मे करोति प्रद्वारे यो गृहे यो निवेशने ।
यो मे केशनखे कुर्या—द्वस्त्रे दन्तधावने ४३
प्रतिसर प्रतिधाव कुमारीव पितुर्गृहान् ।
मूर्धानमेषां स्फोटय पदमेषां कुले कृधि ४४

---

+ [ २९।४० ] ऋ० ६।७५।१९; अथ० १।१९।३ ( पाठभेदेन )
ऋ० ९९

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

ये नो॑ र॒यिं दु॒श्च॒रि॒तासो॑ अग्ने जह्नु॒र्मर्ता॑सो अनृ॑तं वद॑न्तः ।
तेषां॑ वपूं॒ष्य॒र्चिषा॑ जातवेदः शुष्कं॑ न वृ॒क्षम॒भि सं द॑हस्व ४५

कृ॒ष्णव॒र्णे म॑हद्रू॒पे बृ॒हत्क॒र्णे म॒हद्ध्व॑ये । देवि॑ दे॒वि म॑हादे॒वि म॒म श॑त्रून् वि॒नाश॑य ४६
खट्टू फट्टू ज॒हि म॑हाकृत्ये वि॒धूमा॑ग्निस॒मप्र॑भे ।
ज॒हि श॒त्रूंस्त्रि॒शूले॒न क्रु॒ध्यस्व॑ पिब॒ शोणि॑तम् ४७

ये द्रु॒ह्यु॒र्ऋ॒जवे॒ मह्य॑मग्ने क॒दाधियो॑ दु॒र्म॒दा अश्म॑नासः ।
आब॒ध्यै॑तान् शो॒चिषा॑ विध्य॒ तन्तू॑न् वैवस्व॒तस्य॒ सद॑नं नयस्व ४८ [९]

( ३० ) [ऋ० अ०८।७।३०] [ऋ० मं०१०।१४२ सूक्तस्यानन्तरम्।]

हि॒मस्य॑ त्वा ज॒रायु॑णा॒ शाले॒ परि॑ व्ययामसि । [उ॒त ह्र॒दो हिं॑ नो॒ धियो॒ ऽग्निर्द॑दातु भेष॒जम्×]१
शीतह्र॒दो हिं॑ नो॒ धियो॒ ऽग्निर्द॑दातु भेष॒जम् । अन्ति॒काम॒ग्निम॒जन॑य॒ दूर्वा॑दः श॒श॒हाग॑मत्२
अ॒जातपुत्रप॒क्षाया॑ हृद॒यं॑ मम॑ दूयते । विपु॑लं॒ वनं॑ ब॒ह्वाका॑शं॒ चर॑ जातवेद॒ः कामा॑य ३
मां॒ च॒ रक्ष पुत्रां॒श्च॒ शर॑णमभूत् तव॑ । पिं॒गाक्ष॒ लोहि॒तग्री॑व कृ॒ष्णव॑र्ण न॒मोऽस्तु ते ४
अ॒स्मान्नि॒बर्हि॑रस्ये॒ना॑ सा॒गर॑स्योर्म॒यो य॑था । इन्द्रः॑ क्ष॒त्रं द॑दातु वरु॑णम॒भि षिं॑चतु ५
श॒त्रवो॒ निध॑नं या॒न्तु ज॒य त्वं॑ ब्र॒ह्मतेज॑सा । ६[१]

कपिल॒जटीं स॒र्वभ॑क्षं चा॒ग्निं प्र॑त्यक्ष॒दैव॑तम् ॥ ७
वरु॒णं॒ च॒ व॒शाम्यग्रे॑ म॒म पुं॑त्रांश्च॒ रक्ष॑तु [म॒म पुं॑त्रांश्च॒ रक्ष॒त्वों नमः॑ ।] ८
सा॒ग्रं॑ व॒र्षश॒तं जी॑व पि॒ब खाद॑ च॒ मोद॑ च ९
दुः॒खि॒तांश्च द्वि॒जांश्चै॒व प्र॒जां च॑ पशु॒ पाल॑य १०
याव॑दादि॒त्यस्त॑पति॒ याव॑च्च्राजति॒ चन्द्र॑माः । याव॒द्वा॒युः प्लवा॑यति॒ ताव॑ज्जीव॒ जया॑ जय ११

सू० ३०पाठभेदाः- १ जरायुणाग्ने। भुवोऽग्नि०, तुवोऽग्नि०, भवोऽग्नि०, भियोऽग्नि०। २ शीतह्रदो, शीतह्रदा । ०जरद्दूर्वादः,० जनयद्दूर्वासः, ०जनपूर्वादः, ०जनयद्दूर्वादः ०जनयद्दूर्वारः । शिशुरागमत्। ३ धूयते, हूयते। ४ मांश्च। ५ अस्माद्धि बर्ह स्योनां, अस्यान्निर्बहरस्योनां, अस्मान्नि बर्हणस्योनां, अस्मान्निबर्हरस्योनं, अस्मान्वि वर्जय स्थानं । इन्द्रं, इन्द्र शस्त्रं । ६ जयस्त्वं, जय त्वं। १० दुःखितां च, दुःखितांत०, ०तांश्च। ११ वायुः प्रवाजति । जय तावज्जीव जया जय ।

× [३०।१] नैष मन्त्रस्य भागः, पाठभेद एषः ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

येन केन प्रकारेण को हि नाम नु जीवति ।
परेषामुपकारार्थं यज्जीवति स जीवति । एतां वैश्वानरीं सर्वदेवान्नमोऽस्तु ते १२
न चौरभयं न च सर्पभयं न च व्याघ्रभयं न च मृत्युभयम् ।
यस्यापमृत्युर्न च मृत्युः सर्वं लभते सर्वं जयते १३ [२]

(३१) [ऋ०अ०८।८।९] [ऋ०मं० १०।१५१सूक्तस्यानन्तरम्।]

अथ मेधा-सूक्तम् ।

मेधां मह्यमङ्गिरसो मेधां सप्त ऋषयो ददुः । मेधामिन्द्रश्चाग्निश्च मेधां धाता ददातु ते १
मेधां ते वरुणो राजा मेधां देवी सरस्वती । मेधां ते अश्विनौ देवा—वा धत्तां पुष्करस्रजा २
या मेधा अप्सरस्सु गन्धर्वेषु च यन्मनः । दैवी या मानुषी मेधा सा मामा विशताद्दिमाम् ३
यन्मे नोक्तं तद्रमतां शकेयं यदनुब्रुवे ।
निशामतं नि शामहै मयि व्रतं सह व्रतेषु भूयासं ब्रह्मणा सं गमेमहि ४
शरीरं मे विचक्षणं वाङ् मे मधुमद् दुहाम् ।
अवृद्धमहमसौ सूर्यो ब्रह्मणानी स्थः श्रुतं मे मा प्र हासीः ५[१]
मेधां देवीं मनसा रेजमानां गन्धर्वजुष्टां प्रति नो जुषस्व ।
मह्यं मेधां वद मह्यं श्रियं वद मेधावी भूयासमजराजरिष्णु ६
सदसस्पतिमद्भुतं प्रियमिन्द्रस्य काम्यम् । सनिं मेधामयासिषम् ७
यां मेधां देवगणाः पितरश्चोपासते । तया मामद्यमेधया—ऽग्ने मेधाविनं कुरु ८
मेधाव्य१हं सुमनाः सुप्रतीकः श्रद्धामनाः सत्यमतिः सुशेवः ।
महायशा धारयिष्णुः प्रवक्ता भूयासमस्मै शरया प्रयोगे ९

---

सू० ३० पाठभेदाः-१२ विनामनु, हि नाम न, वीनामनु, हीनमनु । वैश्वानरं०, वैश्वानरं देवं सर्वदेव । अग्निं वैश्वानरं वन्दे सर्वदेव नमोऽस्तु ते । १३ यस्यापि मृ० । स सर्वं लभते स सर्वं जयते ।

सू० ३० पाठभेदाः- १ मेधां मह्य० दधातु ते, ददातु मे । २ मेधां मे । ३ अप्सरासु, अप्सरासो, अप्सरेषु । मानुषी युगा । सा माया; मेधा विशतादुमां, मामा विशतादिह । ४ तद्रमतां । यदनुद्रवे । निशामहै मयि व्रतं सह ब्रह्मणा संगमेमहि, ०निशामयि मयि... प्रियेण भूयासं ब्र० । ५ विचक्षण, मधुमद्दुहा, ०मद्रहा, ०मद्रुहां, मधुमत्तमा । अवृतम० । प्र हासीत् । ६ देवीमनसो, देवीं समनसां । मेधावि । ०जरिष्णुः । ८ ०मेधया मेधा०, ०मामद्यमेधाग्ने मेधाविनयं ९ ०समनाः, मेधाव्यंसगणः, मेधाव्यं सुमनः । ०मनाः सत्यमुपः सु०, ०मनास्यप्रमतिं सुवीरः । प्रविक्ता-भूयासमस्ये, ०समर्ये, स्वधया प्रयोगे ।

३१।७-८ ( वा० य० ३२।१३-१४ ) १ (वा० य० ३२।१५ सदृशः)

❀

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

नाशायित्री पलाशस्या—रुषसौ पथिकामसु । अथो ततस्य यक्ष्माण—मपापा रोगनाशिनी १०
ब्रह्मवृक्ष पलाश त्वं श्रद्धां मेधां च देहि मे । वृक्षाधिप नमस्तेऽस्तु अत्र त्वं संनिधौ भव ११ [२]

( ३२ ) [ऋ० अ० ८।८।१९] [ऋ० मं० १०।१६१ सूक्तस्यानन्तरम्]

ऊर्ध्वरेखा प्र दहन्ते विष्णुरिममिन्द्राग्नी अमृतं जुषेथाम् ।
मह्यं दधाना उप दीर्घमायुरस्मे धत्तं पुरुभुजा पुरन्धिः ।

( ३३ ) [ऋ० अ० ८।८।२४] [ऋ० मं० १०।१६६ सूक्तस्यानन्तरम्]

येनेदं भूतं भुवनं भविष्यत् परि गृहीतममृतेन सर्वम् ।
येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसंकल्पमस्तु १
येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः ।
यदपूर्वं यक्षमन्तःप्रजानां तन्मे मनः शिवसंकल्पमस्तु २
यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवेति ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ३
यत् प्रज्ञानमुत चेतो धृतिश्च यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ४
यस्मिन्नृचः साम यजूंषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः
यस्मिंश्चित्तं सर्वमोतं प्रजानां तन्मे मनः शिवसंकल्पमस्तु ५
सुषारथिरश्वानिव यन्मनुष्यान् नेनीयतेऽभीशुभिर्वाजिन इव ।
हृत्प्रतिष्ठं यदजिरं यविष्ठं तन्मे मनः शिवसंकल्पमस्तु ६ [१]

ये पञ्च पञ्चाशतः शतं च सहस्रं च नियुतं चार्बुदं च ।
ते यज्ञचित्तेष्टकाटं शरीरं तन्मे मनः शिवसंकल्पमस्तु ७
वेदाहमेतं पुरुषं महान्त—मादित्यवर्णं तमसः परस्तात् ।
तस्य योनिं परिपश्यन्ति धीरा—स्तन्मे मनः शिवसंकल्पमस्तु ८
येन कर्माणि प्रचरन्ति धीरा विप्रा वाचा मनसा कर्मणा वा ।
यत् स्वां दिशमनु संयन्ति प्राणिन—स्तन्मे मनः शिवसंकल्पमस्तु ९
ये मे मनो हृदयं ये च देवा ये अन्तरिक्षं बहुधा कल्पयन्ति ।
ये श्रोत्रं च चक्षुषी संचरन्ति तन्मे मनः शिवसंकल्पमस्तु १०

[ ३३।१-६ ] ( वा० य० ३४।१-६ ) । ८ ( वा० य० ३१।१८ )

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

यस्येदं धीराः पुनन्ति कवयो ब्रह्माणमेतं व्यावृणत इन्दुम् ।
स्थावरं जङ्गमं च द्यौराकाशं तन्मे मनः शिवसंकल्पमस्तु ११ [२]

येन द्यौरुग्रा पृथिवी चान्तरिक्षं येन पर्वताः प्रदिशो दिशश्च ।
येनेदं सर्वं जगद्व्याप्तं प्रजानत् तन्मे मनः शिवसंकल्पमस्तु १२
अव्यक्तं चाप्रमेयं च व्यक्ताव्यक्तपरं शिवम् ।
सूक्ष्मात् सूक्ष्मतरं ज्ञेयं तन्मे मनः शिवसंकल्पमस्तु १३
कैलासशिखरे रम्ये शंकरस्य गृहालयम् ।
देवतास्तत् प्रमोदन्ते तन्मे मनः शिवसंकल्पमस्तु १४
आदित्यवर्णं तपसा ज्वलन्तं यत् पश्यसि गुहासु जायमानः ।
शिवरूपं शिवमुदितं शिवालयं तन्मे मनः शिवसंकल्पमस्तु १५
येनेदं सर्वं जगतो बभूव यद्देवा अपि महतो जातवेदाः ।
यद्देवाद्यं तपसो ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु १६ [३]

गोभिर्जुष्टो धनेन ह्यायुषा च बलेन च ।
प्रजया पशुभिः पुष्कराक्षं तन्मे मनः शिवसंकल्पमस्तु १७
योऽसौ सर्वेषु वेदेषु पठ्यतेऽनघ ईश्वरः ।
अकार्यो निर्व्रणो ह्यात्मा तन्मे मनः शिवसंकल्पमस्तु १८
यो वेदादिषु गायत्री सर्वव्यापी महेश्वरः ।
तदुक्तं च यदा ज्ञेयं तन्मे मनः शिवसंकल्पमस्तु १९
प्रयतप्राणं ओंकारं प्रणवं च महेश्वरम् ।
यः सर्वं यस्य चित् सर्वं तन्मे मनः शिवसंकल्पमस्तु २०
यो वै वेद महादेवं प्रणवं पुरुषोत्तमम् ।
ओंकारं परमात्मानं तन्मे मनः शिवसंकल्पमस्तु २१ [४]

ओंकारं चतुर्भुजं लोकनाथं नारायणम् ।
सर्वस्थितं सर्वगतं सर्वव्याप्तं तन्मे मनः शिवसंकल्पमस्तु २२
तत् परात् परतो ब्रह्मा तत् परात् परतो हरिः ।
परात् परतरं ज्ञानं तन्मे मनः शिवसंकल्पमस्तु २३
य इदं शिवसंकल्पं सदाधीयन्ति ब्राह्मणाः ।
ते परं मोक्षमाप्स्यन्ति तन्मे मनः शिवसंकल्पमस्तु २४

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

अस्ति नास्ति शयित्वा सर्वमिदं नास्ति पुनस्तथैव दृष्टं ध्रुवम् ।
अस्ति नास्ति हितं मध्यमं पदं तन्मे मनः शिवसंकल्पमस्तु २५
अस्ति नास्ति विपरीतौ प्रवादौ ऽस्ति नास्ति गुह्यं वा इदं सर्वम् ।
अस्ति नास्ति परात् परो यत् परं तन्मे मनः शिवसंकल्पमस्तु २६ [५]

( ३४ ) [ऋ०अ०८।८।४२] [ऋ०मं०१०।१८४सूक्तस्यानन्तरम् ।]

त्वष्टारूपकर्ता ( नेजमेषः )। विष्णुः । अनुष्टुप् ।

नेजमेष परा पत सुपुत्रः पुनरा पत । अस्यै मे पुत्रकामायै गर्भमा धेहि यः पुमान् १
यथेयं पृथिवी मह्यु—त्ताना गर्भमादधे । एवं तं गर्भमा धेहि दशमे मासि सूतवे २
विष्णोः श्रेष्ठेन रूपेणा—ऽस्यां नार्यां गवीन्याम् । पुमांसं पुत्राना धेहि दशमे मासि सूतवे ३

( ३५ ) [ऋ०अ०८।८।४५] [ऋ०मं० १०।१८७सूक्तस्यानन्तरम् ।]

वत्स आग्नेयः । अग्निः । गायत्री ।

अनीकवन्तमूतयेऽग्निं गीर्भिर्हवामहे । स नः पर्षदति द्विषः १

( ३६ ) [ऋ०मं० ८।८।४९] [ ऋग्वेदस्य दशममण्डलस्यान्ते । ]

संज्ञानमुशनावदत् संज्ञानं वरुणोऽवदत् । संज्ञानमिन्द्रश्चाग्निश्च संज्ञानं सवितावदत् १
संज्ञानं वः स्वेभ्यः संज्ञानमरणेभ्यः । संज्ञानमश्विना युव मिहास्मासु नि यच्छताम् २
यत् कक्षीवां संवननं पुत्रो अङ्गिरसां भवेत् । तेन नोऽद्य विश्वे देवाः सं प्रियां समजीजनन् ३
सं वो मनांसि जानतां समाकूतिर्मनामसि । असौ यो विमना मनः सं समावर्तयामसि ४
नैर्हस्त्यं सेनादरणं परि वर्त्मेतु यद्भविः । तेनामित्राणां बाहून् हविषा शोषयामसि ५
परिवर्त्मान्येषामिन्द्रः पूषा च सस्रतुः ।
तेषां वो अग्निदग्धानामग्निमूल्हाना मिन्द्रो हन्तु वरंवरम् ६
ऐषु नह्यवृषाजिनं हरिणस्य धियं यथा । परा अमित्रां ऐष त्व—र्वाची गौरुपाजतु ७
प्राध्वराणां पते वसो होतर्वरेण्यक्रतो । तुभ्यं गायत्रमृच्यते ८

---

सू० ३४ पाठभेदः- १ दशास्यां पुत्राना ।

सू० ३६ पाठभेदाः- १ वःस्वेभ्यः, वस्वभ्यः, नः स्वेभ्यः । ३ ०वांसंवननो, ०वान्संवननो । ०सामवे, ०सामवेत् समचीचरन् । ४ नमामसि । ५ जनस्तं समावर्त० ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

गोकामो अन्नकामः प्रजाकाम उत कश्यपः ।
भूतं भविष्यत् प्रस्तौति सह ब्रह्मैकमक्षरं बहुब्रह्मैकमक्षरम् ९
यदक्षरं भूतकृतं विश्वेदेवा उपासते । महं ऋषिमस्य गोप्तारं जमदग्निरकुर्वतम् १०
जमदग्निराप्यायते छन्दोभिश्चतुरुत्तरैः । राजा सोमस्य भक्षेण ब्रह्मणा वीर्यवता ११
शिवा नः प्रदिशो दिशः सत्या नः प्रदिशो दिशः ।
अजो यत् तेजो ददृश्रे शुक्रं ज्योतिः परो गुहा १२
यदृषिः कश्यपः स्तौति सत्यं ब्रह्म चराचरं ध्रुवं ब्रह्म चराचरम् ।
त्र्यायुषं जमदग्नेः कश्यपस्य त्र्यायुषम्—ऽगस्त्यस्य त्र्यायुषम् १३
यद्देवानां त्र्यायुषं तन्मे अस्तु त्र्यायुषं सर्वमस्तु शतायुषं बलायुषम् । १४
तच्छंयोरा वृणीमहे गातुं यज्ञाय गातुं यज्ञपतये ।
दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्यः ।
ऊर्ध्वं जिगातु भेषजं शं नो अस्तु द्विपदे शं चतुष्पदे १५

॥ इति परिशिष्टानि ॥

---

१३-१४ ( अथ० ५।२८।७; वा० य० ३।६२ )
१५ ( तै० सं० २।६।१०।२ )

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# अष्टौ विकृतयः ।

संहितालक्षणम् ।

परः सन्निकर्षः संहिता । (अष्टाध्याय्यां १।४।१०९ पाणिनिः ) ( वर्णानामतिशयितः संनिधिः संहितासंज्ञः स्यात् )

## [१] संहितामन्त्रः ।

ओषधयःसंवदन्तेसोमेनसहराज्ञा । यस्मैकृणोतिब्राह्मणस्तंराजन्पारयामसि ॥

( ऋ० अष्टक ८, अ० ५, व० ११; मं० १०, सू० ९७, मं० २२ )

(पदच्छेदपूर्वको) मंत्रपाठः ।

ओषधयः सं वदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस् तं राजन् पारयामसि ॥

पदसंहितालक्षणम् ।

पदविच्छेदोऽसंहितः ॥ ( प्रातिशाख्यसूत्रे कात्यायनः )

## [२] पदपाठः ।

ओषधयः । सं । वदन्ते । सोमेन । सह । राज्ञा ।
१ २ ३ ४ ५ ६

यस्मै । कृणोति । ब्राह्मणः । तं । राजन् । पारयामसि ॥ १ ॥
७ ८ ९ १० ११ १२

क्रमलक्षणम् ।

क्रमेण पदद्वयस्य पाठः । क्रमपाठो 'योगरूढा संहिता' इत्युच्यते । 'क्रमः स्मृतिप्रयोजनः' ( प्रा० सू० ४।१८ कात्यायनः )

## [३] क्रमपाठः ।

ओषधयः सं । सं वदंते । वदंते सोमेन । सोमेन सह । सह राज्ञा । राज्ञेति राज्ञा ॥
१ २ २ ३ ३ ४ ४ ५ ५ ६ ६ ६

यस्मै कृणोति । कृणोति ब्राह्मणः । ब्राह्मणस्तं । तं राजन् । राजन् पारयामसि ।
७ ८ ८ ९ ९ १० १० ११ ११ १२

पारयामसीति पारयामसि ॥ १ ॥
१२ १२

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

## [४] पञ्चसन्धिः ।

### पञ्चसंधिलक्षणम् ।

अनुक्रमश्चोत्क्रमश्च व्युत्क्रमोऽभिक्रमस्तथा । संक्रमश्चेति पञ्चैते जटायां कथिताः क्रमाः ॥

क्रमः= १ + २; २ + ३ । उत्क्रमः= २ + २; ३ + ३ । व्युत्क्रमः= २ + १; ३ + २ ।
अभिक्रमः= १+१; २ + २ । संक्रमः= १ + २, २ + ३ ।

| ( क्रमः ) | ( उत्क्रमः ) | ( व्युत्क्रमः ) | ( अभिक्रमः ) | ( संक्रमः ) |
|---|---|---|---|---|
| १–२ | २–२ | २–१ | १–१ | १–२ |

ओषधयः सं । सं सं । समोषधयः । ओषधय ओषधयः । ओषधयः सं ।
१ २ २ २ २ १ १ १ १ २

सं वदन्ते । वदन्ते वदन्ते । वदन्ते सं । सं सं । सं वदन्ते ।
२ ३ ३ ३ ३ २ २ २ २ ३

वदन्ते सोमेन । सोमेन सोमेन । सोमेन वदन्ते । वदन्ते वदन्ते । वदन्ते सोमेन ।
३ ४ ४ ४ ४ ३ ३ ३ ३ ४

सोमेन सह । सह सह । सह सोमेन । सोमेन सोमेन । सोमेन सह ।
४ ५ ५ ५ ५ ४ ४ ४ ४ ५

सह राज्ञा । राज्ञा राज्ञा । राज्ञा सह । सह सह । सह राज्ञा ।
५ ६ ६ ६ ६ ५ ५ ५ ५ ६

राज्ञेति राज्ञा ।
६ ६



' तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । ' ( ऋ० अ० ३।४।१०, मं० ३।६२।१० ) इत्यस्य—

### पञ्चसन्धिः ।

तत्सवितुः । सवितुस्सवितुः । सवितुस्तत् । तत्तत् । तत्सवितुः ।
सवितुर्वरेण्यं । वरेण्यं वरेण्यं । वरेण्यं सवितुः । सवितुस्सवितुः । सवितुर्वरेण्यं ।
वरेण्यं भर्गः । भर्गो भर्गः । भर्गो वरेण्यं । वरेण्यं वरेण्यं । वरेण्यं भर्गः ।
भर्गो देवस्य । देवस्य देवस्य । देवस्य भर्गः । भर्गो भर्गः । भर्गो देवस्य ।
देवस्य धीमहि । धीमहि धीमहि । धीमहि देवस्य । देवस्य देवस्य । देवस्य धीमहि ।
धीमहीति धीमहि । ( एवमग्रेऽपि )



CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

## विकृति-लक्षणानि ।

शैशिरीये समाम्नाये व्यालिनैव[1] महर्षिणा ।
जटाद्या विकृतीरष्टौ लक्ष्यन्ते नातिविस्तरम् ॥ १ ॥
जटा माला शिखा रेखा ध्वजो दण्डो रथो घनः ।
अष्टौ विकृतयः प्रोक्ताः क्रमपूर्वा महर्षिभिः ॥ २ ॥

अष्टौ विकृतयः क्रमपूर्वा भवन्ति । तासु जटा-दण्डसंज्ञके द्वे विकृती मुख्ये । यत एताभ्यामेवान्या विकृतयः संभवन्ति । तत्र जटां शिखाऽनुसरति । तथा च दण्डं माला-रेखा-ध्वज-रथा अनुसरन्ति । घनस्तु जटादण्डावनुसरति ।

### [ १ ] जटा ।

#### प्रथमं जटालक्षणम् ।

अनुलोमविलोमाभ्यां त्रिवारं हि पठेत् क्रमम् । विलोमे पदवत्संधिः अनुलोमे यथाक्रमम् ॥

#### द्वितीयं जटालक्षणम् ।

क्रमे यथोक्ते पदजातमेव द्विरभ्यसेदुत्तरमेव पूर्वम् ।
अभ्यस्य पूर्वं च तथोत्तरे पदे ऽवसानमेवं हि जटाभिधीयते ॥

जटा= अनुलोमः १–२ + विलोमः २–१ + अनुलोमः १–२ ॥ [ क्रमः १–२ + व्युत्क्रमः २–१ + संक्रमः १–२ ]

### जटापाठः ।

ओषधयस् सं, समोषधय, ओषधयस् सम् ॥ सं वदन्ते, वदन्ते सं, सं वदन्ते ॥
१ २ २ १ १ २ २ ३ ३ २ २ ३

वदन्ते सोमेन, सोमेन वदन्ते, वदन्ते सोमेन ॥ सोमेन सह, सह सोमेन, सोमेन सह ॥
३ ४ ४ ३ ३ ४ ४ ५ ५ ४ ४ ५

सह राज्ञा, राज्ञा सह, सह राज्ञा ॥ राज्ञेति राज्ञा ॥
५ ६ ६ ५ ५ ६ ६ ६

यस्मै कृणोति, कृणोति यस्मै, यस्मै कृणोति ॥
७ ८ ८ ७ ७ ८

कृणोति ब्राह्मणो, ब्राह्मणः कृणोति, कृणोति ब्राह्मणः ॥
८ ९ ९ ८ ८ ९

ब्राह्मणस्तं, तं ब्राह्मणो, ब्राह्मणस्तं ॥ तं राजन्, राजंस्तं, तं राजन् ॥
९ १० १० ९ ९ १० १० ११ ११ १० १० ११

राजन्पारयामसि, पारयामसि राजन्, राजन्पारयामसि ॥ पारयामसीति पारयामसि ॥ १ ॥
११ १२ १२ ११ ११ १२ १२ १२

---

१ व्यालिना=व्याडिना ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

## [ २ ] माला ।

मालाया द्वौ भेदौ पुष्पमाला-क्रममाला चेति । तत्र क्रममालायाः लक्षणम्-

क्रम-मालालक्षणम् ।

ब्रूयात्क्रमविपर्यासावर्धर्चस्यादितोऽन्ततः। अन्तं चादिं नयेदेवं क्रममालेति गीयते ॥

### ( १ क्रम-माला )

ओषधयः सं । राज्ञेति राज्ञा ॥ सं वदन्ते । राज्ञा सह ॥ वदन्ते सोमेन । सह सोमेन ॥
१ २ ६ ६ २ ३ ६ ५ ३ ४ ५ ४

सोमेन सह । सोमेन वदन्ते ॥ सह राज्ञा । वदन्ते सं ॥ राज्ञेति राज्ञा । समोषधयः ॥
४ ५ ४ ३ ५ ६ ३ २ ६ ६ २ १

यस्मै कृणोति । पारयामसीति पारयामसि ॥ कृणोति ब्राह्मणः । पारयामसि राजन् ॥
७ ८ १२ १२ ८ ९ १२ ११

ब्राह्मणस्तं । राजँस्तं ॥ तं राजन् । तं ब्राह्मणः ॥ राजन्पारयामसि । ब्राह्मणः कृणोति ॥
९ १० ११ १० १० ११ १० ९ ११ १२ ९ ८

पारयामसीति पारयामसि ॥ कृणोति यस्मै ॥
१२ ११

+ क्रम-माला

ओषधयः सं । १ — २ राज्ञेति राज्ञा

सं वदन्ते । ३ — ४ राज्ञा सह ।

वदन्ते सोमेन । ५ — ६ सह सोमेन ।

सोमेन सह । ७ — ८ सोमेन वदन्ते ।

सह राज्ञा । ९ — १० वदन्ते सं ।

राज्ञेति राज्ञा । ११ — १२ समोषधयः ।

यस्मै कृणोति । १३ — १४ पारयामसीति पारयामसि ।

कृणोति ब्राह्मणः । १५ — १६ पारयामसि राजन् ।

ब्राह्मणस्तं । १७ — १८ राजँस्तं ।

तं राजन् । १९ — २० तं ब्राह्मणः ।

राजन् पारयामसि । २१ — २२ ब्राह्मणः कृणोति ।

पारयामसीति पारयामसि । २३ — २४ कृणोति यस्मै ।

+ क्रममालायाः पठनक्रमोऽङ्काङ्कैः प्रदर्शितः ।

*

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

## ( क्रम–माला )

| [ आदितोऽन्ततः ] = [ अन्तं चादिं नयेत् ] | | | [ आदितोऽन्ततः ] = [ अन्तं चादिं नयेत् ] | | |
|---|---|---|---|---|---|
| [१] १ ओषधयः सं | — राज्ञेति राज्ञा | ६ | [२] ७ यस्मै कृणोति | — पारयामसीति पारयामसि | १२ |
| २ सं वदन्ते | — राज्ञा सह | ५ | ८ कृणोति ब्राह्मणः | – पारयामसि राजन् | ११ |
| ३ वदन्ते सोमेन | — सह सोमेन | ४ | ९ ब्राह्मणस् तं | — राजँस्तं | १० |
| ४ सोमेन सह | — सोमेन वदन्ते | ३ | १० तं राजन् | — तं ब्राह्मणः | ९ |
| ५ सह राज्ञा | — वदन्ते सं | २ | ११ राजन् पारयामसि | – ब्राह्मणः कृणोति | ८ |
| ६ राज्ञेति राज्ञा | — समोषधयः | १ | १२ पारयामसीति पारयामसि | – कृणोति यस्मै | ७ |

## ( २ पुष्पमाला । )

### पुष्पमाला-लक्षणम् ।

माला मालेव पुष्पाणां पदानां ग्रन्थिनी हि सा । आवर्तन्ते त्रयस्तस्यां क्रमव्युत्क्रमसंक्रमाः ॥

जटावदेव पुष्पमाला भवति । तत्र प्रतिपदं विराम इतिकारश्चेति विशेषः । केचिच्च पुष्पमालाया-मितिकारं पदसन्धिस्थानेऽपि वदन्ति। यथा- "समोषधय" इति 'सम् ओषधयः'। "ब्राह्मणस्तं" इति 'ब्राह्मणः तम्'। "राजँस्तं" इति राजन् तम् । इत्यादिः ।

| | ( क्रमः ) विरामः | ( व्युत्क्रमः ) विरामः | ( संक्रमः ) | | |
|---|---|---|---|---|---|
| १ | ओषधयः सं | समोषधयः | ओषधयः सं । | इति । | ( विराम ) |
| २ | सं वदन्ते | वदन्ते सं | सं वदन्ते | ,, | ,, |
| ३ | वदन्ते सोमेन | सोमेन वदन्ते | वदन्ते सोमेन | ,, | ,, |
| ४ | सोमेन सह | सह सोमेन | सोमेन सह | ,, | ,, |
| ५ | सह राज्ञा | राज्ञा सह | सह राज्ञा | ,, | ,, |
| ६ | राज्ञेति राज्ञा | | | | |
| ७ | यस्मै कृणोति | कृणोति यस्मै | यस्मै कृणोति | ,, | ,, |
| ८ | कृणोति ब्राह्मणः | ब्राह्मणः कृणोति | कृणोति ब्राह्मणः | ,, | ,, |
| ९ | ब्राह्मणस्तं | तं ब्राह्मणः | ब्राह्मणस्तं | ,, | ,, |
| १० | तं राजन् | राजँस्तं | तं राजन् | ,, | ,, |
| ११ | राजन्पारयामसि | पारयामसि राजन् | राजन्पारयामसि | | |
| १२ | पारयामसीति पारयामसि । | | | | |

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# [ ३ ] शिखा ।

## शिखा-लक्षणम् ।

पदोत्तरां जटामेव शिखामार्याः प्रचक्षते ।

ओषधयः सं, समोषधय, ओषधयः सं, — वदन्ते ।
१ २ २ १ १ २ ३

सं वदन्ते, वदन्ते सं, सं वदन्ते, — सोमेन ।
२ ३ ३ २ २ ३ ४

वदन्ते सोमेन, सोमेन वदन्ते, वदन्ते सोमेन, — सह ।
३ ४ ४ ३ ३ ४ ५

सोमेन सह, सह सोमेन, सोमेन सह, — राज्ञा ।
४ ५ ५ ४ ४ ५ ६

सह राज्ञा, राज्ञा सह, सह राज्ञा ।
५ ६ ६ ५ ५ ६

राज्ञेति राज्ञा ।
६ ६

यस्मै कृणोति, कृणोति यस्मै, यस्मै कृणोति, — ब्राह्मणः ।
७ ८ ८ ७ ७ ८ ९

कृणोति ब्राह्मणो, ब्राह्मणः कृणोति, कृणोति ब्राह्मणस् — तम् ।
८ ९ ९ ८ ८ ९ १०

ब्राह्मणस्तं, तं ब्राह्मणो, ब्राह्मणस्तं, — राजन् ।
९ १० १० ९ ९ १० ११

तं राजन्, राजंस्तं, तं राजन्, — पारयामसि ।
१० ११ ११ १० १० ११ १२

राजन्पारयामसि, पारयामसि राजन्, राजन् पारयामसि ।
११ १२ १२ ११ ११ १२

पारयामसीति पारयामसि ।
१२ १२

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# [४] रेखा ।

रेखा-लक्षणम् ।

क्रमाद् द्वित्रिचतुष्पञ्चपदक्रममुदाहरेत् । पृथक्पृथग्विपर्यस्य लेखामाहुः पुनः क्रमात् ॥

पूर्वार्धस्य-

२ (पदद्वयं) = ओषधयः सं । समोषधयः । ओषधयः सं ॥
३ (पदत्रयं) = सं वदन्ते सोमेन । सोमेन वदन्ते सं । सं वदन्ते ॥
४(पदचतुष्कं) = वदन्ते सोमेन सह राज्ञा । राज्ञा सह सोमेन वदन्ते । वदन्ते सोमेन ॥
सोमेन सह । सह राज्ञा । राज्ञेति राज्ञा ॥

उत्तरार्धस्य-

२ = यस्मै कृणोति । कृणोति यस्मै । यस्मै कृणोति ॥
३ = कृणोति ब्राह्मणस्तं । तं ब्राह्मणः कृणोति । कृणोति ब्राह्मणः ॥
४ = ब्राह्मणस्तं राजन् पारयामसि । पारयामसि राजंस्तं ब्राह्मणः । ब्राह्मणस्तं ॥
तं राजन् । राजन् पारयामसि । पारयामसीति पारयामसि ॥

[ यद्वा सर्वस्य मन्त्रस्य ]

२ ( पदद्वयं ) = ओषधयः सं । समोषधयः । ओषधयः सम् ॥
३ ( पदत्रयं ) = सं वदन्ते सोमेन । सोमेन वदन्ते सं । सं वदन्ते ॥
४ ( पदचतुष्कं ) = वदन्ते सोमेन सह राज्ञा । राज्ञा सह सोमेन वदन्ते । वदन्ते सोमेन ॥
५ ( पदपञ्चकं ) = सोमेन सह राज्ञा यस्मै कृणोति । कृणोति यस्मै राज्ञा सह सोमेन । सोमेन सह ।
६ ( पदषट्कं ) = सह राज्ञा यस्मै कृणोति ब्राह्मणस्तं । तं ब्राह्मणः कृणोति यस्मै राज्ञा सह ।
सह राज्ञा ॥
७ ( पदसप्तकं ) = राज्ञा यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ।
पारयामसि राजंस्तं ब्राह्मणः कृणोति यस्मै राज्ञा । राज्ञा यस्मै ॥
यस्मै कृणोति । कृणोति ब्राह्मणः । ब्राह्मणस्तं । तं राजन् । राजन् पारयामसि ।
पारयामसीति पारयामसि ॥

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# [५] ध्वजः ।

## ध्वज-लक्षणम् ।

ब्रूयादादेः क्रमं सम्यगन्तादुत्तारयेद्यदि । वर्गं च ऋचि वा यत्र पठनं स ध्वजः स्मृतः ॥

| (आदेः क्रमः) | (अन्तादुत्तारणं) |
|---|---|
| १ ओषधयः सं । | २ पारयामसीति पारयामसि । |
| ३ सं वदन्ते । | ४ राजन् पारयामसि । |
| ५ वदन्ते सोमेन । | ६ तं राजन् । |
| ७ सोमेन सह । | ८ ब्राह्मणस्तं । |
| ९ सह राज्ञा । | १० कृणोति ब्राह्मणः । |
| ११ राज्ञेति राज्ञा । | १२ यस्मै कृणोति । |
| १३ यस्मै कृणोति । | १४ राज्ञेति राज्ञा |
| १५ कृणोति ब्राह्मणः । | १६ सह राज्ञा । |
| १७ ब्राह्मणस्तं । | १८ सोमेन सह । |
| १९ तं राजन् । | २० वदन्ते सोमेन । |
| २१ राजन् पारयामसि । | २२ सं वदन्ते । |
| २३ पारयामसीति पारयामसि। | २४ ओषधयः सं । |

## अत्र विशेषः।

१ अत्र ध्वजस्य पठनक्रमोऽङ्कैः प्रदर्शितः ।

२ यथा मन्त्रस्यैकस्यैवं ध्वजो भवति, तथैव पञ्च-षट्-सप्त-मन्त्रसंख्याकस्य वर्गस्याप्येवमेव ध्वजो भवति । तत्र वर्गादिस्थितस्य पदद्वयस्य वर्गान्तस्थेन पदेन द्विरुक्तेनेतिकारसहितेन च संबंधो ज्ञातव्यः । यथा **'अग्निमीळे...आ गमदिति आ गमत्'** इति प्रथमस्य वर्गस्य ऋग्वेदस्य ध्वजो बोद्धव्यः ।

---

❀ वर्गे वा ऋषि वा यः स्यात्पठितः स ध्वजः स्मृतः । इति वा पाठः ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

## [६] दण्डः ।

### दण्ड–लक्षणम् ।

क्रममुक्त्वा विपर्यस्य पुनश्च क्रममुत्तरम् । अर्धर्चादेवमुक्तोऽयं क्रमदण्डोऽभिधीयते ॥

पूर्वार्धस्य–

२ = ओषधयः सं ॥ समोषधयः ।

३ = ओषधयः सं । सं वदन्ते ॥ वदन्ते समोषधयः ।

४ = ओषधयः सं । सं वदन्ते । वदन्ते सोमेन ॥ सोमेन वदन्ते समोषधयः ।

५ = ओषधयः सं । सं वदन्ते । वदन्ते सोमेन । सोमेन सह ॥ सह सोमेन वदन्ते समोषधयः ।

६ = ओषधयः सं । सं वदन्ते । वदन्ते सोमेन । सोमेन सह । सह राज्ञा ॥

राज्ञा सह सोमेन वदन्ते समोषधयः ।

ओषधयः सं । सं वदन्ते । वदन्ते सोमेन । सोमेन सह । सह राज्ञा ॥ राज्ञेति राज्ञा ।

उत्तरार्धस्य–

२ = यस्मै कृणोति ॥ कृणोति यस्मै ।

३ = यस्मै कृणोति । कृणोति ब्राह्मणः ॥ ब्राह्मणः कृणोति यस्मै ।

४ = यस्मै कृणोति । कृणोति ब्राह्मणः । ब्राह्मणस्तं ॥ तं ब्राह्मणः कृणोति यस्मै ।

५ = यस्मै कृणोति । कृणोति ब्राह्मणः । ब्राह्मणस्तं । तं राजन् ॥ राजंस्तं ब्राह्मणः कृणोति यस्मै ।

६ = यस्मै कृणोति । कृणोति ब्राह्मणः । ब्राह्मणस्तं । तं राजन् । राजन् पारयामसि ॥

पारयामसि राजंस्तं ब्राह्मणः कृणोति यस्मै ।

यस्मै कृणोति । कृणोति ब्राह्मणः । ब्राह्मणस्तं । तं राजन् । राजन् पारयामसि ॥

पारयामसीति पारयामसि ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



# [७] रथः।

रथ-लक्षणम् ।

पादशोऽर्धर्चशो वापि सहोक्त्या दण्डवद्रथः ।

रथस्त्रिविधः। द्विचक्रस्त्रिचक्रश्चतुश्चक्रश्चेति । तत्र द्विचक्रो रथोऽर्धर्चशो भवति । त्रिचक्रस्तु रथः प्रतिपादे समानपद-संख्यायुतस्य गायत्रीछन्दस्कस्यैव मन्त्रस्य भवति । चतुश्चक्रो रथस्तु पादश एव भवति ।

(१) द्विचक्रो रथः (अर्धर्चशः)
(पूर्वार्धः) (उत्तरार्धः)

[१] (१) ओषधयः सं । यस्मै कृणोति । (प्रथम एकपात्क्रमः)
समोषधयः । कृणोति यस्मै । (व्युत्क्रमः)

[२] (१) ओषधयः सं । यस्मै कृणोति । (द्वितीयो द्विपात्क्रमः)
(२) सं वदन्ते । कृणोति ब्राह्मणः । ,,
वदन्ते समोषधयः । ब्राह्मणः कृणोति यस्मै । (व्युत्क्रमः)

[३] (१) ओषधयः सं । यस्मै कृणोति । (तृतीयस्त्रिपात्क्रमः)
(२) सं वदन्ते । कृणोति ब्राह्मणः। ,,
(३) वदन्ते सोमेन । ब्राह्मणस्तं । ,,
सोमेन वदन्ते समोषधयः । तं ब्राह्मणः कृणोति यस्मै । (व्युत्क्रमः)

[४] (१) ओषधयः सं । यस्मै कृणोति । (चतुर्थश्चतुष्पात्क्रमः)
(२) सं वदन्ते । कृणोति ब्राह्मणः । ,,
(३) वदन्ते सोमेन। ब्राह्मणस्तं । ,,
(४) सोमेन सह । तं राजन् । ,,
सह सोमेन वदन्ते समोषधयः । राजंस्तं ब्राह्मणः कृणोति यस्मै । (व्युत्क्रमः)

[५] (१) ओषधयः सं । यस्मै कृणोति। (पञ्चमः पञ्चपात्क्रमः)
(२) सं वदन्ते । कृणोति ब्राह्मणः । ,,
(३) वदन्ते सोमेन । ब्राह्मणस्तं । ,,
(४) सोमेन सह । तं राजन् । ,,
(५) सह राज्ञा । राजन् पारयामसि। ,,
राज्ञेति राज्ञा । पारयामसीति पारयामसि । (समाप्तिः)


CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations


## (२) द्विचक्रो रथः ।

अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम् । होतारं रत्नधातमम् ॥ ऋ० १।१।१
अयं देवाय जन्मने स्तोमो विप्रेभिरासया । अकारि रत्नधातमः ॥ ऋ० १।२०।१

मन्त्रद्वयस्य सहोक्त्याऽपि द्विचक्रो रथो भवति । सहोक्तिपाठभेदेन स द्विधा विभज्यते । तत्र प्रथमः—

(ऋ० १।१।१) (ऋ० १।२०।१)

[१] अग्निमीळे । अयं देवाय ॥
ईळेऽग्निं । देवायायं ॥

[२] अग्निमीळे । ईळे पुरोहितं ॥ अयं देवाय । देवाय जन्मने ॥
पुरोहितमीळेऽग्निं । जन्मने देवायायं ॥

[३] अग्निमीळे । ईळे पुरोहितं । पुरोहितं यज्ञस्य ॥ अयं देवाय । देवाय जन्मने । जन्मने स्तोमः ॥
यज्ञस्य पुरोहितमीळेऽग्निं । स्तोमो जन्मने देवायायं ॥

[४] अग्निमीळे । ईळे पुरोहितं । पुरोहितं यज्ञस्य । 'पुरोहितमिति पुरःऽहितं' । यज्ञस्य देवं ॥
अयं देवाय । देवाय जन्मने । जन्मने स्तोमः । स्तोमो विप्रेभिः ॥
देवं यज्ञस्य पुरोहितमीळेऽग्निं ॥ विप्रेभिः स्तोमो जन्मने देवायायं ॥

[५] अग्निमीळे । ईळे पुरोहितं । पुरोहितं यज्ञस्य । 'पुरोहितमिति पुरःऽहितं' । यज्ञस्य देवं ।
देवमृत्विजं ॥
अय देवाय । देवाय जन्मने । जन्मने स्तोमः । स्तोमो विप्रेभिः । विप्रेभिरासया ॥
ऋत्विजं देवं यज्ञस्य पुरोहितमीळेऽग्निं ॥ आसया विप्रेभिः स्तोमो जन्मने देवायायं ॥

[६] अग्निमीळे । ईळे पुरोहितं । पुरोहितं यज्ञस्य । 'पुरोहितमिति पुरःऽहितं' । यज्ञस्य देवं ।
देवमृत्विजं ॥
अयं देवाय । देवाय जन्मने । जन्मने स्तोमः । स्तोमो विप्रेभिः । विप्रेभिरासया ।
ऋत्विजमित्यृत्विजं । आसयेत्यासया ॥

[७] होतारं रत्नधातमं । अकारि रत्नधातमः ॥
रत्नधातमं होतारं । रत्नधातमोऽकारि ॥
होतारं रत्नधातमं । अकारि रत्नधातमः ॥
रत्नधातममिति रत्नऽधातमं । रत्नधातम इति रत्नऽधातमः ॥

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuyan Vani Trust Donations

## (३) द्विचक्रो रथः ।

पूर्वोक्तयोर्द्वयोर्मन्त्रयोः सहोक्त्या द्विचक्रो रथो भवति । तस्य द्वितीयः प्रकारो यथा—

(ऋ० १।१।१) (ऋ० १।२०।१)

[१](१)अग्निमीळे । अयं देवाय ॥
ईळेऽग्निं । देवायायं ॥

[२](१)अग्निमीळे । अयं देवाय ॥
(२)ईळे पुरोहितं । देवाय जन्मने ॥
पुरोहितमीळेऽग्निं । जन्मने देवायायं ॥

[३](१)अग्निमीळे । अयं देवाय ॥
(२)ईळे पुरोहितं । देवाय जन्मने ॥
(३)पुरोहितं यज्ञस्य । जन्मने स्तोमः ॥
यज्ञस्य पुरोहितमीळेऽग्निं ॥
स्तोमो जन्मने देवायायं ॥

[४](१)अग्निमीळे । अयं देवाय ॥
(२)ईळे पुरोहितं । देवाय जन्मने ॥
(३)पुरोहितं यज्ञस्य । जन्मने स्तोमः ॥
'पुरोहितमिति पुरःऽहितं' ।
(४)यज्ञस्य देवं । स्तोमो विप्रेभिः ॥
देवं यज्ञस्य पुरोहितमीळेऽग्निं ॥
विप्रेभिः स्तोमो जन्मने देवायायं ॥

(ऋ० १।१।१) (ऋ० १।२०।१)

[५](१)अग्निमीळे । अयं देवाय ॥
(२)ईळे पुरोहितं । देवाय जन्मने ॥
(३)पुरोहितं यज्ञस्य । जन्मने स्तोमः ॥
'पुरोहितमिति पुरःऽहितं' ।
(४)यज्ञस्य देवं । स्तोमो विप्रेभिः ॥
(५)देवमृत्विजं । विप्रेभिरासया ॥
ऋत्विजं देवं यज्ञस्य पुरोहितमीळेऽग्निं ।
आसया विप्रेभिः स्तोमो जन्मने देवायायं ।

[६](१)अग्निमीळे । अयं देवाय ॥
(२)ईळे पुरोहितं । देवाय जन्मने ॥
(३)पुरोहितं यज्ञस्य । जन्मने स्तोमः ॥
'पुरोहितमिति पुरःऽहितं' ।
(४)यज्ञस्य देवं । स्तोमो विप्रेभिः ॥
(५)देवमृत्विजं । विप्रेभिरासया ॥
(६)ऋत्विजमित्यृत्विजं । आसयेत्यासया ॥

[७](१)होतारं रत्नधातमं । अक्रारि रत्नधातमः ॥
रत्नधातमं होतारं । रत्नधातमोऽक्रारि ॥
होतारं रत्नधातमं । अक्रारि रत्नधातमः ॥
रत्नधातममिति रत्नऽधातमं ।
रत्नधातम इति रत्नऽधातमः ॥

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

## (४) त्रिचक्रो रथः ।

विष्णोः कर्माणि पश्यत यतो व्रतानि पस्पशे । इन्द्रस्य युज्यः सखा ॥ (ऋ० १।२२।१९)

इत्यस्य त्रिपदागायत्रीछन्दस्कस्य मन्त्रस्य प्रतिपादं समानपदसंख्यत्वात्त्रिचक्रो रथो भवति, यथा—

(प्रथमः पादः) (द्वितीयः पादः) (तृतीयः पादः)

[१] (१) विष्णोः कर्माणि । यतो व्रतानि । इंद्रस्य युज्यः । (प्रथमः क्रमः)
कर्माणि विष्णोः । व्रतानि यतः । युज्य इंद्रस्य । (व्युत्क्रमः)

[२] (१) विष्णोः कर्माणि । यतो व्रतानि । इंद्रस्य युज्यः । (द्वितीयः क्रमः)
(२) कर्माणि पश्यत । व्रतानि पस्पशे । युज्यः सखा । ”
पश्यत कर्माणि विष्णोः । पस्पशे व्रतानि यतः । सखा युज्य इंद्रस्य । (व्युत्क्रमः)

(प्रथमः पादः) विष्णोः कर्माणि । कर्माणि पश्यत । पश्यतेति पश्यत । (समाप्तिः)
(द्वितीयः ”) यतो व्रतानि । व्रतानि पस्पशे । पस्पश इति पस्पशे । ”
(तृतीयः ”) इंद्रस्य युज्यः । युज्यः सखा । सखेति सखा । ”

---

## (५) चतुश्चक्रो रथः ।

चतुश्चक्रो रथश्चतुष्पान्मन्त्रस्य पादशो भवति, यथा—

(प्रथमः पादः) (द्वितीयः पादः) (तृतीयः पादः) (चतुर्थः पादः)

[१] (१) ओषधयः सं । सोमेन सह । यस्मै कृणोति । तं राजन् । (प्रथमः क्रमः)
समोषधयः । सह सोमेन । कृणोति यस्मै । राजंस्तं । (व्युत्क्रमः)

[२] (१) ओषधयः सं । सोमेन सह । यस्मै कृणोति । तं राजन् । (द्वितीयः क्रमः)
(२) सं वदंते । सह राज्ञा । कृणोति ब्राह्मणः । राजन्पारयामसि । ”
वदंते समोषधयः । राज्ञा सह सोमेन । ब्राह्मणः कृणोति यस्मै । पारयामसि राजंस्तं । (व्युत्क्रमः)

(प्रथमः पादः) ओषधयः सं । सं वदंते । वदंत इति वदन्ते । (समाप्तिः)
(द्वितीयः ”) सोमेन सह । सह राज्ञा । राज्ञेति राज्ञा । ”
(तृतीयः ”) यस्मै कृणोति । कृणोति ब्राह्मणः । ब्राह्मण इति ब्राह्मणः । ”
(चतुर्थः ”) तं राजन् । राजन्पारयामसि । पारयामसीति पारयामसि । ”

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# [८] घनः ।

घनश्चतुर्विधः । घनो घनवल्लभश्च । तौ च प्रत्येकं द्विधा भवतः ।

## [१] प्रथमं घन-लक्षणम् ।

अन्तात्क्रमं पठेत्पूर्वमादिपर्यन्तमानयेत् । आदिक्रमं नयेदन्तं घनमाहुर्मनीषिणः ॥

( १ ) पूर्वार्धस्य ( अन्तादादिपर्यन्तम् )

[१] राज्ञेति राज्ञा । सह राज्ञा । सोमेन सह । वदन्ते सोमेन । सं वदन्ते । ओषधयः सं—

( आदितोऽन्तपर्यन्तम् )

सं वदन्ते । वदन्ते सोमेन । सोमेन सह । सह राज्ञा । राज्ञेति राज्ञा ।

( २ ) उत्तरार्धस्य (अन्तादादिपर्यन्तम्)

[२] पारयामसीति पारयामसि । राजन् पारयामसि । तं राजन् । ब्राह्मणस्तं । कृणोति ब्राह्मणः । यस्मै कृणोति—

( आदितोऽन्तपर्यन्तम् )

कृणोति ब्राह्मणः । ब्राह्मणस्तं । तं राजन् । राजन् पारयामसि । पारयामसीति पारयामसि

## [२] द्वितीयं घनलक्षणम् ।

शिखामुक्त्वा विपर्यस्य तत्पदानि पुनः पठेत् । अयं घन इति प्रोक्त [ इत्यष्टौ विकृतीः पठेत् ] ॥

[१]

| शिखापाठः | | | तस्य विपर्यासः | तत्पदानां पुनःपाठः |
|---|---|---|---|---|
| ओषधयः सं | समोषधय | ओषधयः सं वदन्ते | वदन्ते समोषधय | ओषधयः सं वदन्ते॥ |
| सं वदन्ते | वदन्ते सं | सं वदन्ते सोमेन | सोमेन वदन्ते सं | सं वदन्ते सोमेन ॥ |
| वदन्ते सोमेन | सोमेन वदन्ते | वदन्ते सोमेन सह | सह सोमेन वदन्ते | वदन्ते सोमेन सह॥ |
| सोमेन सह | सह सोमेन | सोमेन सह राज्ञा | राज्ञा सह सोमेन | सोमेन सह राज्ञा ॥ |
| सह राज्ञा | राज्ञा सह | सह राज्ञा ॥ | राज्ञेति राज्ञा॥ | |

[२]

| | | | | |
|---|---|---|---|---|
| यस्मै कृणोति | कृणोति यस्मै | यस्मै कृणोति ब्राह्मणो | ब्राह्मणः कृणोति यस्मै | यस्मै कृणोति ब्राह्मणः॥ |
| कृणोति ब्राह्मणो | ब्राह्मणः कृणोति | कृणोति ब्राह्मणस्तं | तं ब्राह्मणः कृणोति | कृणोति ब्राह्मणस्तं ॥ |
| ब्राह्मणस्तं | तं ब्राह्मणो | ब्राह्मणस्तं राजन् | राजंस्तं ब्राह्मणो | ब्राह्मणस्तं राजन् ॥ |
| तं राजन् | राजंस्तं | तं राजन् पारयामसि | पारयामसि राजंस्तं | तं राजन् पारयामसि॥ |
| राजन् पारयामसि | | पारयामसि राजन् । राजन् पारयामसि ॥ | पारयामसीति पारयामसि । | |

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# घनपाठः ।

द्वितीयघनलक्षणस्यान्यदुदाहरणम् ।

( १ शिखापाठः, २ तस्याविपर्ययः, ३ तत्पदानां च पुनः पाठो घनः । )

गायन्ति त्वा गायत्रिणोऽर्चन्त्यर्कमर्किणः ।
ब्रह्माणस्त्वा शतक्रत उद्वंशमिव येमिरे । (ऋ० १।१०।१)

(१) प्रथमोऽर्धः ।

[१] गायंति त्वा, त्वा गायंति, गायंति त्वा, गायत्रिणो; गायत्रिणस्त्वा गायंति । गायंति त्वा गायत्रिणः ॥

[२] त्वा गायत्रिणो, गायत्रिणस्त्वा, त्वा गायत्रिणो,ऽर्चंत्य;—ऽर्चंति गायत्रिणस्त्वा । त्वा गायत्रिणोऽर्चंति ॥

[३] गायत्रिणोऽर्चंत्य,—ऽर्चंति गायत्रिणो, गायत्रिणोऽर्चंत्यर्कम—ऽर्कमर्चंति गायत्रिणो । गायत्रिणोऽर्चंत्यर्कम् ॥

[४] अर्चंत्यर्कम—ऽर्कमर्चंत्य—ऽर्चंत्यर्कम—ऽर्किणो;ऽर्किणोऽर्कमर्चंत्य—ऽर्चंत्यर्कमर्किणः ॥

[५] अर्कमर्किणो,—ऽर्किणोऽर्कम—ऽर्कमर्किणः ॥ अर्किण इत्यर्किणः ॥

(२) द्वितीयोऽर्धः ।

[१] ब्रह्माणस्त्वा, त्वा ब्रह्माणो, ब्रह्माणस्त्वा, शतक्रतो; शतक्रतो त्वा ब्रह्माणो, ब्रह्माणस्त्वा शतक्रतो ॥

[२] त्वा शतक्रतो, शतक्रतो त्वा, त्वा शतक्रत, उदु—च्छतक्रतो त्वा । त्वा शतक्रत उत् ॥

[३] शतक्रत उदुच्छतक्रतो, शतक्रत उद्वंशमिव; वंशमिवोच्छतक्रतो, शतक्रत उद्वंशमिव ॥ शतक्रतो इति शतऽक्रतो ॥

[४] उद्वंशमिव, वंशमिवोदुद्वंशमिव, येमिरे; येमिरे वंशमिवोदु—द्वंशमिव येमिरे ॥

[५] वंशमिव येमिरे, येमिरे वंशमिव, वंशमिव येमिरे ॥
वंशमिवेति वंशम्ऽइव । येमिर इति येमिरे ॥

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# पञ्चसन्धियुक्तो घनपाठः ।

( घनवल्लभः )

पदद्वयस्य क्रमोत्क्रमव्युत्क्रमाभिक्रमसंक्रमैः पञ्चसन्धिपाठो भवति । अनुलोमविलोमानुलोमैर्जटापाठो जायते । जटया सहोत्तरपदपाठेन शिखापाठो भवति । क्रममुक्त्वा, विपर्यस्य, पुनश्च क्रमपाठे कृते ध्वजो भवति । जटादण्डाभ्यां घनपाठः सिद्ध्यति । सर्वमेवैतत्पञ्चसंधियुते घनपाठे घनवल्लभे समुच्चयेन संगच्छते । पञ्चसंधियुतेन अन्तादादिपर्यंतमादेरन्तपर्यंतं च पाठेन द्वितीयो घनवल्लभः सिध्यति ।

परा मे यन्ति धीतयो गावो न गव्यूतीरनु ।
इच्छन्तीरुरुचक्षसम् ॥ (ऋ० १।२५।१६)

[१] परा मे । मे मे । मे परा । परा परा । परा मे ॥
परा मे, मे परा, परा मे, यंति; यंति मे परा, परा मे यंति ॥

[२] मे यंति । यंति यंति । यंति मे । मे मे । मे यंति ॥
मे यंति, यंति मे, मे यंति, धीतयो; धीतयो यंति मे, मे यंति धीतयः ॥

[३] यंति धीतयः । धीतयो धीतयः । धीतयो यंति । यंति यंति । यंति धीतयः ॥
यंति धीतयो, धीतयो यंति, यंति धीतयो, गावो; गावो धीतयो यंति, यंति धीतयो गावः ॥

[४] धीतयो गावः । गावो गावः । गावो धीतयः । धीतयो धीतयः । धीतयो गावः ।
धीतयो गावो, गावो धीतयो, धीतयो गावो; नः; न गावो धीतयो, धीतयो गावो न ॥

[५] गावो न । न न । न गावः । गावो गावः । गावो न ॥
गावो न, न गावो, गावो न, गव्यूती;—र्गव्यूतीर्न गावो, गावो न गव्यूतीः ॥

[६] न गव्यूतीः । गव्यूतीर्गव्यूतीः । गव्यूतीर्न । न न । न गव्यूतीः ।
न गव्यूती,र्गव्यूतीर्न, न गव्यूतीर—ऽन्व;—ऽनु गव्यूतीर्न, न गव्यूतीरनु ॥

[७] गव्यूतीरनु । अन्वनु । अनु गव्यूतीः । गव्यूतीर्गव्यूतीः । गव्यूतीरनु ।
गव्यूतीरन्व—ऽनुगव्यूती—र्गव्यूतीरनु ॥ अन्वित्यनु ॥

[८] इच्छंतीरुरुचक्षसं । उरुचक्षसमुरुचक्षसं । उरुचक्षसमिच्छंतीः । इच्छंतीरिच्छंतीः ।
इच्छंतीरुरुचक्षसं ॥

इच्छन्तीरुरुचक्षस—मुरुचक्षसमिच्छती—रिच्छन्तीरुरुचक्षसम् ॥
उरुचक्षसमित्युरुऽचक्षसं ॥

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

## पञ्चसन्धियुक्तो जटापाठः ।

◁————पञ्चसंधिपाठः————▷ ◁———जटापाठः———▷

[१] परा मे । मे मे । मे परा । परा परा । परा मे ॥ परा मे, मे परा, परा मे ॥

[२] मे यंति । यंति यंति । यंति मे । मे मे । मे यंति ॥ मे यंति, यंति मे, मे यंति ॥

[३] यंति धीतयः । धीतयो धीतयः । धीतयो यंति । यंति यंति । यंति धीतयः ॥
यंति धीतयो, धीतयो यंति, यंति धीतयः ॥

[४] धीतयो गावः । गावो गावः । गावो धीतयः । धीतयो धीतयः । धीतयो गावः ॥
धीतयो गावो, गावो धीतयो, धीतयो गावः ॥

[५] गावो न । न न । न गावः । गावो गावः । गावो न ॥ गावो न, न गावो, गावो न ॥

[६] न गव्यूतीः । गव्यूतीर्गव्यूतीः । गव्यूतीर्न । न न । न गव्यूतीः॥ न गव्यूतीर्गव्यूतीर्न न गव्यूतीः ॥

[७] गव्यूतीरनु । अन्वनु । अनु गव्यूतीः । गव्यूतीर्गव्यूतीः । गव्यूतीरनु ॥
गव्यूतीरन्वनु गव्यूतीर्गव्यूतीरनु ॥ अन्वित्यनु ॥

[८] इच्छंतीरुरुचक्षसं । उरुचक्षसमुरुचक्षसं । उरुचक्षसमिच्छंतीः । इच्छंतीरिच्छंतीः ।
इच्छंतीरुरुचक्षसं ॥
इच्छंतीरुरुचक्षसमुरुचक्षसमिच्छंतीरिच्छंतीरुरुचक्षसं ।
उरुचक्षसमित्युरुऽचक्षसं ॥

[ एवमेव पञ्चसन्धियुक्ताः सर्वा अपि विकृतयः पठ्यन्ते वेदविद्भिः । ]

पदक्रमविशेषज्ञो वर्णक्रमविचक्षणः ।
स्वरमात्राविशेषज्ञो गच्छेदाचार्यसंपदम् ॥
संहितापाठतः पुण्यं द्विगुणं पदपाठतः ।
त्रिगुणं क्रमपाठेन जटापाठेन षड्गुणम् ॥ (वराहपुराणे)

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

# अथ भगवत्कात्यायनविरचिता

# ऋग्वेद-सर्वानुक्रमणी ।

अथ ऋग्वेदाम्नाये शाकलके सूक्तप्रतीकऋक्संख्यऋषिदैवतच्छन्दांस्यनुक्रमिष्यामो यथोपदेशं । न ह्येतज्ज्ञानमृते श्रौतस्मार्तकर्मप्रसिद्धिः । मंत्राणां ब्राह्मणार्षेयच्छंदोदैवतविद् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छतीति । एताभ्यामेवानेवंविदो यातयामानि च्छंदांसि भवंति । स्थाणुं वर्च्छति, गर्ते वा पात्यते, प्रमीयते वा, पापीयान्भवतीति विज्ञायते ॥१॥ [१]

अथ ऋषयः ॥१॥ शतर्चिन आद्ये मंडले,ऽन्त्ये क्षुद्रसूक्तमहासूक्ता, मध्यमेषु माध्यमाः ॥२॥ क्वचित्कथंचिदविशेषितं ब्रह्मर्षिमस्त्रियमनुक्तगोत्रमांगिरसं विद्यात् ॥३॥ यस्य वाक्यं स ऋषिः ॥४॥ या तेनोच्यते सा देवता ॥५॥ यदक्षरपरिमाणं तच्छंदः ॥६॥ अर्थेप्सव ऋषयो देवताश्छंदोभिरुपाधावन् ॥७॥ तिस्र एव देवताः क्षित्यंतरिक्षद्युस्थाना, अग्निर्वायुः सूर्य इति ॥८॥ एवं व्याहृतयः प्रोक्ता व्यस्ताः ॥९॥ समस्तानां प्रजापतिः ॥१०॥ ओंकारः सर्वदेवत्यः, पारमेष्ठ्यो वा ब्राह्मो, दैव, आध्यात्मिकः ॥११॥ तत्तत्स्थाना अन्यदेवतास्तद्विभूतयः ॥१२॥ कर्मपृथक्त्वाद्धि पृथगभिधानस्तुतयो भवंति ॥१३॥ एकैव वा महानात्मा देवता ॥१४॥ स सूर्य इत्याचक्षते ॥१५॥ स हि सर्वभूतात्मा ॥१६॥ तदुक्तमृषिणा 'सूर्य आत्मा जगतस्तस्थुषश्चेति' ॥१७॥ तद्विभूतयोऽन्या देवताः ॥१८॥ तदप्येतदृचोक्तं ॥१९॥ 'इंद्रं मित्रं वरुणमग्निमाहुरिति' ॥२०॥ यथाभिधानं त्वनुक्रमिष्यामः ॥२१॥ प्रायेणैन्द्रे मरुतः ॥२२॥ राज्ञां च दानस्तुतयः ॥२३॥ [२]

अथ च्छंदांसि ॥१॥ गायत्र्युष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगत्यतिजगतीशक्वर्यतिशक्वर्यष्ट्यत्यष्टीधृत्यतिधृतयः ॥२॥ चतुर्विंशत्यक्षरादीनि चतुरुत्तराणि ॥३॥ ऊनाधिकेनैकेन निचृद्भुरिजौ ॥४॥ द्वाभ्यां विराट्स्वराजौ ॥५॥ पादपूरणार्थं तु क्षैप्रसंयोगैकाक्षरीभावान्व्यूहेत् ॥६॥ आद्ये तु सप्तवर्गे पादविशेषात्संज्ञाविशेषाः ॥७॥ताननुक्रामंत एवोदाहरिष्यामः ॥८॥ विराड्रूपा विराट्स्थानाश्च बहूना अपि त्रिष्टुभ एवेत्युद्देशः ॥९॥ तत्र दशैकादशद्वादशाक्षराणां वैराजत्रैष्टुभजागता इति संज्ञाः ॥१०॥ अनादेशेऽष्टाक्षराः पादाः ॥११॥ चतुष्पदाश्चर्चः ॥१२॥ [३]

प्रथमं छंदस्त्रिपदा गायत्री ॥१॥ पंचकाश्चत्वारः षट्कश्चैकश्चतुर्थश्चतुष्को वा पदपंक्तिः ॥२॥ षट्सप्तैकादशः उष्णिग्गर्भा ॥३॥ त्रयः सप्तकाः पादनिचृत् ॥४॥ मध्यमः षट्कश्चेदतिनिचृत् ॥५॥ दशकश्चेद्यवमध्या ॥६॥ यस्यास्तु षट्कसप्तकाष्टकाः सा वर्धमाना ॥७॥ विपरीता प्रतिष्ठा ॥८॥ द्वौ षट्कौ सप्तकश्च ह्रसीयसी ॥९॥ [४]

द्वितीयमुष्णिक् त्रिपदांत्यो द्वादशकः ॥१॥ आद्यश्चेत्पुरउष्णिक् ॥२॥ मध्यमश्चेत्ककुप् ॥३॥ त्रैष्टुभजागतचतुष्काः ककुम्न्यंकुशिरा ॥४॥ एकादशिनोः परः षट्कस्तनुशिरा ॥५॥ मध्ये चेत्पिपीलिकमध्या ॥६॥ आद्यः पंचकस्त्रयोऽष्टका अनुष्टुब्गर्भा ॥७॥ चतुःसप्तकोष्णिगेव ॥८॥ [५]

तृतीयमनुष्टुप् ॥१॥ पंच पंचकाः षट्कश्चैको महापदपंक्तिः॥२॥ जागतावष्टकश्च कृतिः ॥३॥ मध्ये चेदष्टकः पिपीलिकमध्या ॥४॥ नवकयोर्मध्ये जागतः काविराट् ॥५॥ नववैराजत्रयोदशैर्नष्टरूपी ॥६॥ दशकास्त्रयो विराट् ॥७॥ एकादशका वा॥८॥ [६]

---

चतुर्थं बृहती तृतीयो द्वादशकः ॥१॥ आद्यश्चेत्पुरस्ताद्बृहती ॥२॥ द्वितीयश्चेन्न्यंकुसारिण्युरोबृहती वा स्कंधोग्रीवी वा

[१] ब्राह्मण आर्षेयः । स श्रेयोऽधिगच्छतीत्येताभ्या० । अधिगच्छति । भवंत्यधस्तु विपरीते । स्थाणुमृच्छति ।

[२] (२) क्षुद्रसूक्ता । (३) ब्रह्म ऋषि० । (७) देवताश्छंदोभिरभ्यधावन् । (१०)०आर्षं तु प्रजापतिः । (११) आध्यात्मिकः । पारमेष्ठ्यो वा । (१२) तत्तत्स्थाना अन्यास्तद्विभूतयः । (१७) ऋ० १।११५।१ । (२०) ऋ० १।१६४।४६

[३] (२) अस्य सूत्रस्यानन्तरमेष मंत्रो दृश्यते । 'कृतिः प्रकृतिराकृतिर्विकृतिः संकृतिस्तथा । षष्ठी चाभिकृतिर्नाम सप्तम्युत्कृतिरुच्यते ॥' (ऋ० प्राति०) (४) एकेनोनाधिकेन । [४] (९) सप्तकश्चेति । [५] (१) द्वादश ।



CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

॥३॥ अंत्यश्चेदुपरिष्टाद्बृहती ॥४॥ अष्टिनोर्मध्ये दशकौ विष्टारबृहती ॥५॥ त्रिजागतोर्ध्वबृहती ॥६॥ त्रयोदशिनोर्मध्येऽष्टकः पिपीलिकमध्या ॥७॥ युजावष्टकावयुजौ नवैकादशिनौ बृहती विषमपदा ॥८॥ चतुर्नवका बृहत्येव ॥९॥ [७]

पंचमं पंक्तिः पंचपदा ॥१॥ अथ चतुष्पदा ॥२॥ विराड् दशकैः ॥३॥ अयुजौ जागतौ सतोबृहती ॥४॥ युजौ चेद्विपरीता ॥५॥ आद्यौ चेत्प्रस्तारपंक्तिः ॥६॥ अंत्यौ चेदास्तारपंक्तिः॥७॥ आद्यांत्यौ चेत्संस्तारपंक्तिः ॥८॥ मध्यमौ चेद्विष्टारपंक्तिः॥९॥[८]

षष्ठं त्रिष्टुप् त्रैष्टुभपदा ॥१॥ द्वौ तु जागतौ यस्याः सा जागतं जगती ॥२॥ त्रैष्टुभे त्रिष्टुप् ॥३॥ वैराजौ जागतौ चाभिसारिणी ॥४॥ नवकौ वैराजस्त्रैष्टुभश्च द्वौ वा वैराजौ नवकस्त्रैष्टुभश्च विराट्स्थाना ॥५॥ एकादशिनस्त्रयोऽष्टकश्च विराड्रूपा ॥६॥ द्वादशिनस्त्रयोऽष्टकश्च ज्योतिष्मती ॥७॥ यतोऽष्टकस्ततो ज्योतिः ॥८॥ चत्वारोऽष्टका जागतश्च महाबृहती ॥९॥ मध्ये चेद्यवमध्या ॥१०॥ आद्यौ दशकादष्टकास्त्रयः पंक्त्युत्तरा विराट्पूर्वा वा ॥११॥ [९]

सप्तमं जगती जागतपदा ॥१॥ अष्टिनस्त्रयः स्त्रौ च द्वौ महासतोबृहती॥२॥ अष्टकौ सप्तकः षट्को दशको नवकश्च षळष्टका वा महापंक्तिः ॥३॥ [१०]

अथ प्रगाथाः ॥१॥ बृहतीसतोबृहत्यौ बार्हतः ॥२॥ ककुप् चेत्पूर्वा काकुभः ॥३॥ महाबृहतीमहासतोबृहत्यौ महाबार्हतः ॥४॥ बृहतीविपरीते विपरीतोत्तरः ॥५॥ अनुष्टुब्गायत्र्यौ चानुष्टुभोऽनुष्टुम्मुखास्तृचा इत्युक्ते ॥६॥ [११]

सूक्तसंख्यानुवर्तेत आन्यस्याः सूक्तसंख्यायाः ॥१॥ ऋषिश्चान्यस्मादृषेरवाविशिष्टः ॥२॥ तु--हि--ह--वै--तच्छंदविशिष्टाऋषिदैवतच्छंदांसि द्वि-त्रि-चतुः-पंच-षट्-सूक्तभांजि यथासंख्यं ॥३॥ अनिरुक्ता संख्या विंशतिः ॥४॥ अनादेशे त्विंद्रो देवता ॥५॥ त्रिष्टुप् छंदः ॥६॥ प्रगाथा बार्हताः ॥७॥ विंशतिका द्विपदा विराजः ॥८॥ तदर्धमेकपदाः ॥९॥ द्विर्द्विपदास्त्वृचः समामनंति॥१०॥ अयुक्संख्या द्विपदैव ॥११॥ मंडलादिष्वाग्नेयमैंद्रात् ॥१२॥ त्रिष्टुबंतस्य सूक्तस्य शिष्टा जगत्यः ॥१३॥ आदौ गायत्रं प्राग्घैरण्यस्तूपीयात् ॥१४॥ [१२]

॥ इति द्वादशकांडी तु परिभाषा प्रवर्णिता ॥

१ अग्निं नव मधुच्छंदा वैश्वामित्रः । २ वायो वायव्यैंद्रवायवमैत्रावरुणास्तृचाः । ३ अश्विना द्वादशाश्विनैंद्रवैश्वदेवसारस्वतास्तृचाः । सप्तैताः प्रउगदेवताः । ४ सुरूपकृत्नुं दशैंद्रं । ५ आ तु । ६ युंजंत्याद्येस्त्वेताः षण्मारुत्यो धीळु चिदिंद्रेणेत्यैंद्र्यौ च । ७ इंद्रमित् । ८ एंद्र सानसिं । ९ इंद्रेहि । १० गायंति द्वादशानुष्टुभं तु । ११ इंद्रमष्टौ जेता माधुच्छंदसः । १२ अग्निं द्वादश मेधातिथिः काण्व आग्नेयमग्निनेति पादो ह्यग्निदैवतो निर्मथ्याहवनीयौ । १३ सुसमिद्ध इतीध्मः समिद्धो दाग्निस्तनूनपान्नराशंस इळो बर्हिर्देवीर्द्वार उषासानक्ता दैव्यौ होतारौ प्रचेतसौ तिस्रो देव्यः सरस्वतीळाभारत्यस्त्वष्टा वनस्पतिः स्वाहाकृतय इति प्रत्यृचं देवताः । एतदाप्रीसूक्तं । एतेनान्यान्युक्तदैवतानि । एकादशकानि तु नाराशंसान्याप्रशब्दोक्तान्यतनूनपांति । १४ ऐभिर्वैश्वदेवं । १५ इंद्र सोममृतव्यं । तत्रैंद्री मारुती त्वाष्ट्र्याग्नेय्यैंद्री मैत्रावरुणी चतस्रो द्रविणोदस आश्विन्याग्नेयीत्यृतुदेवताः सर्वत्र । १६ आ त्वा नव । १७ इंद्रावरुणयोरैंद्रावरुणं युवाकु पादनिचृतौ इन्द्रो हसीयसी वा । १८ सोमानमिति पंच ब्राह्मणस्पत्याश्चतुर्थ्यामिंद्रश्च सोमश्च पंचम्यां दक्षिणा चान्त्याः सादसस्पत्या नाराशंसी वांत्या । १९ प्रति त्यमाग्निमारुतं ॥ [१] (मन्त्राः १९४)

२० अयमष्टावार्भवं । २१ इह षळैंद्राग्नं । २२ प्रातर्युजा सैका चतस्र आश्विन्यस्तथा सावित्र्य आग्नेय्यौ द्वे देवीनामेकैकेंद्राणीवरुणान्यग्नायीनां द्यावापृथिव्ये पार्थिवी षड्वैष्णव्योऽतो देवा दैवी वा । २३ तीव्राश्चतुर्विंशतिर्वायव्यैकैंद्रवायव्यौ मैत्रावरुणमरुत्वतीयवैश्वदेवपौष्णास्तृचाः शिष्टा आप्योऽत्याध्यर्धाग्नेय्यप्स्वंतः पुरउष्णिक् परानुष्टुप्तिस्रश्चांत्या एकविंशी प्रतिष्ठा।

[७] (३) ०बृहती स्कंधोग्रीवी वा । (८) नवकाष्टकैकादशाष्टिनो विषमपदा; नवकाष्टयेकादश्यष्टिनो विषमपदा ।
[८] चतुष्पादा । (३) दशकाः । वैराजैर्विराट् ।
[१२] (८) विंशिका । (१०) तृचः; ०दा ऋचः । (१३) शेषा । (१४) प्राग्घिरण्यस्तूपात् ।
(१२) निर्मथ्य; निर्मथ्य । निर्मथ्य आहवनीयश्च । निर्मथ्याहवनीयाभ्यास् ।
(१३) देवता । (१५) ०ग्नेय्यृतुदेवताः (१८) वा; चांत्या । (२२) देवीनामेकैंद्राणीवरुणानि । (२३) शेषा ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

२४ कस्य पंचोनाजीगर्तिः शुनःशेपः स कृत्रिमो वैश्वामित्रो देवरातो वारुणं तु त्रैष्टुभमादौ कायप्राग्नेय्यौ सावित्रस्तृचो गायत्रोऽस्यांत्या भागो वा । २५ यच्चित्सैका । २६ वसिष्व दशाग्नेयं तु । २७ अश्वं सप्तोना गायत्रंऽत्या दैवी त्रिष्टुप् । २८ यत्र ग्रावा नव षळनुष्टुबादि यच्चिद्वौल्लूखल्यौ परे मौसल्यौ च प्रजापतेर्हरिश्चंद्रस्यांत्या चर्मप्रशंसा वा । २९ यच्चित्सप्त पांक्तं । ३० आ वो त्र्यधिकास्माकं पादनिचृच्छश्वत्त्रिष्टुप्परौ तृचावाश्विनोषस्यौ । ३१ त्वमग्ने द्व्यूना हिरण्यस्तूप आग्नेयं त्रिष्टुबंत्याष्टमीषोळश्यौ च । ३२ इंद्रस्य पंचोना ॥ [२] (मन्त्राः १८९)

३३ एत । ३४ त्रिश्चिद्द्वादशाश्विनं नवम्यंत्ये त्रिष्टुभौ । ३५ ह्वयाम्येकादश सावित्रं नवमी जगत्याद्या च सा लिंगोक्तदैवतपादा । ३६ प्र वो विंशतिः कण्वो घौर आग्नेयं प्रागाथमूर्ध्व ऊ षु यौप्यौ । ३७ क्रीळं पंचोना मारुतं हि गायत्रं तु । ३८ कद्ध । ३९ प्र यद्दश प्रागाथं तु । ४० उत्तिष्ठाष्टौ ब्राह्मणस्पत्यं । ४१ यं रक्षंति नव वरुणमित्रार्यम्णां मध्ये तृच आदित्येभ्यो गायत्रं हि ।४२ सं पूषन्दश पौष्णं । ४३ कद्रुद्राय नव रौद्रं तृतीया मैत्रावरुणी चांत्यस्तृचः सौम्योऽत्यानुष्टुप् । ४४ अग्ने षळूना प्रस्कण्वः काण्व आग्नेयं तु प्रागाथमाद्यो द्व्यचोऽश्व्युषसां च । ४५ त्वमग्ने दशानुष्टुभमर्धर्चोऽन्त्यो देवः । ४६ एषो पंचोनाश्विनं तु गायत्रं ॥ [३] (मन्त्राः १७३)

४७ अयं दश प्रागाथं तु । ४८ सह षोळशोषस्यं तु । ४९ उषश्चतुष्कमानुष्टुभं तु । ५० उदु त्यं सप्तोना सौर्यं नवाद्या गायत्र्योऽन्त्यस्तृचो रोगघ्न उपनिषत् । ५१ अभि त्यं पंचोना सव्यो द्वित्रिष्टुबंतं । अंगिरा इंद्रतुल्यं पुत्रमिच्छन्नभ्यध्यायत्सव्य इतींद्र एवास्य पुत्रोऽजायत । ५२ त्यं सु त्रयोदश्यंत्ये त्रिष्टुभौ । ५३ न्यू ष्वेकादशांत्ये त्रिष्टुभौ । ५४ मा नोंऽत्या त्रिष्टुप् षष्ठ्यष्टमी नवमी च । ५५ दिवश्चिदष्टौ जागतं हि । ५६ एष प्र षट् । ५७ प्र मंहिष्ठाय । ५८ नू चित्सप्त नोधा गौतम आग्नेयं हि चतुस्त्रिष्टुबंतं । ५९ वया इत्सप्त वैश्वानरीयं । ६० वह्निं पंच । ६१ अस्मा इदु षोळश ॥ [४] (मन्त्राः १५२)

६२ प्र सप्तोना । ६३ त्वं नव । ६४ वृष्णे पंचोना मारुतं त्रिष्टुबंतं । परमाग्नेयमैंद्रात् । ६५ पश्वा दश पराशरः शाक्त्यो द्वैपदं तत् । ६६ रयिः । ६७ वनेषु । ६८ श्रीणन् । ६९ शुक्रः । ७० वनेमैकादश । ७१ उप प्र दश । ७२ नि काव्या । ७३ रयिर्न । ७४ उपप्रयंतो नव गोतमो राहूगणो गायत्रं तु । ७५ जुषस्व पंच । ७६ का ते । ७७ कथा । ७८ अभि त्वा गायत्रं तु । ७९ हिरण्यकेशो द्वादशाद्यौ तृचौ त्रैष्टुभौष्णिहौ पूर्वोऽग्नये वा मध्यमाय । ८० इत्था षोळशैंद्रं पांक्तं हि यामित्यस्यां निपातिनो दध्यङ्ङनुरथर्वा चेति ॥ [५] (मन्त्राः १८५)

८१ इंद्रो नव । ८२ उपो षु षड् जगत्यंतं । ८३ अश्वावति जागतं । ८४ असावि विंशतिः षळनुष्टुभ औष्णिहपांक्तगायत्रत्रैष्टुभास्तृचाः प्रगाथः । ८५ प्र ये द्वादश मारुतं ह पंचम्यंत्ये त्रिष्टुभौ । ८६ मरुतो दश गायत्रं । ८७ प्रत्वक्षसः षड् जागतं । ८८ आ विद्युन्मद्भिराद्यांत्ये प्रस्तारपंक्ती पंचमी विराड्रूपा । ८९ आ नो दश वैश्वदेवं तु पंचाद्याः सप्तमी च जगत्यः षष्ठी विराट्स्थाना । ९० ऋजुनीती नव गायत्रमंत्यानुष्टुप् । ९१ त्वं सोम त्र्यधिका सौम्यं पंचम्यादि गायत्र्यो द्वादशोष्णिक् च । ९२ एता उ त्या द्व्यूनोषस्यं चतुर्जगत्यादि षळुष्णिगंतं तृचोंऽत्य आश्विनः । ९३ अग्नीषोमौ द्वादशाग्नीषोमीयमाद्यास्तिस्रोऽनुष्टुभ उपांत्यास्तिस्रो गायत्र्योऽष्टमी जगती वा । ९४ इमं षोळश कुत्स आग्नेयं तद्द्वित्रिष्टुबंतं पूर्वो देवास्त्रयः पादा दैवास्तन्नो मित्रोऽर्धर्चो लिंगोक्तदेवतो यद्दैवत्यं वा सूक्तं ॥ [६] (मन्त्राः १६३)

९५ द्वे एकादशौषसाय वाग्नये । ९६ स प्रत्नथा नव द्रविणोदसे । ९७ अप नोऽष्टौ शुचये गायत्रं । ९८ वैश्वानरस्य तृचं वैश्वानरीयं । ९९ जातवेदस एका जातवेदस्यमेतदादीन्येकभूयांसि सूक्तसहस्रमेतत्कश्यपार्षं । १०० स यो वृषैकोना वार्षागिरा ऋज्राश्वांबरीषसहदेवभयमानसुराधसः । १०१ प्र मंदिन एकादश कुत्स आद्या गर्भस्राविण्युपनिषच्चतुस्त्रिष्टुबंतं ।

(२४) अस्यांता । (२६) वसिष्वा । (२९) यच्चिद्धि । (३०) तृचावाश्विनौषस्यं । (३४) नवम्यंते (३५) लिंगोक्तदैवताः पादास्त्रयः; दैवतपादाः । (३६) वोर । (५०) उपनिषद् अंत्योऽर्धर्चः शत्रुघ्नश्च । द्विपघ्नः । (८५) पंचम्यंते । (९४) ०देवत्यौ; ०दैवतो । यद्दैवत्यं । (९५) एकादशोषसाय । (९९) सूक्तसहस्रमेतत्तु कश्यपार्षं । (१०१) कुत्सश्चतुस्त्रिष्टुबंतनाद्या गर्भस्राविण्युपनिषत् ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

१०२ इमां तेऽन्त्या त्रिष्टुप्। १०३ तत्तेऽष्टौ। १०४ योनिर्नव। १०५ चंद्रमा एकोनाप्त्यस्त्रितो वा वैश्वदेवं हि पांक्तमंत्या त्रिष्टुबष्टमी महाबृहती यवमध्या। १०६ इंद्रं मित्रं सप्त त्रिष्टुबंतं। १०७ यज्ञस्तृचं। १०८ य इंद्राग्नी सप्तोनैंद्राग्नं तु। १०९ वि ह्यष्टौ। ११० ततं नवार्भवं तु पंचम्यंत्ये त्रिष्टुभौ। १११ तक्षन्पंचांत्या त्रिष्टुप्। ११२ ईळे पंचाधिकाश्विनमाद्यौ पादौ लिंगोक्तदेवतावंत्ये त्रिष्टुभौ॥ [७] (मन्त्राः १७९)

११३ इदं विंशतिरुषस्यं द्वितीयोऽर्धर्चो रात्रेश्च। ११४ इमा एकादश रौद्रं द्विस्त्रिष्टुबंतं। ११५ चित्रं षट् सौर्यं। ११६ नासत्याभ्यां पंचाधिका कक्षीवान्दैर्घतमस उशिक्प्रसूत आश्विनं वै। ११७ मध्वः। ११८ आ वामेकादश। ११९ आ वां रथं दश जागतं। १२० का राधद्द्वादशांत्या दुःस्वप्ननाशिन्याद्या गायत्री द्वितीया ककुप्तृतीयाचतुर्थ्यौ काविराण्नष्टरूप्यौ पंचमी तनुशिरा षष्ठ्यक्षरैरुष्णिग्विष्टारबृहती कृतिर्विराट् तिस्रो गायत्र्यः। १२१ कदित्था पंचोना वैश्वदेवं वा। [८] (मन्त्राः १३५) [इति प्रथमोऽष्टकः। मन्त्राः १३७०]

१२२ प्र वो वैश्वदेवमा वो विराड्रूपे। १२३ पृथुः सप्तोनोषस्यं तु। १२४ उषा उच्छंती। १२५ प्राता रत्नं सप्त स्वनयस्य दानस्तुतिरुपजगत्यौ। १२६ अमंदानिति कक्षीवान्दानतुष्टः पंचभिर्भावयव्यं तुष्टावांत्ये अनुष्टुभौ भावयव्यरोमशयोर्दंपत्योः संवादः। १२७ अग्निमेकादश परुच्छेपो दैवोदासिराग्नेयं तु पारुच्छेपं सर्वमात्यष्टं तत्रातिधृतिः षष्ठी। १२८ अयं जायताष्टौ। १२९ यं त्वमेकादश षष्ठ्यैंद्रवी प्रप्रा वोऽतिशक्वर्यावष्टिरंत्या। १३० एंद्र याहि दशांत्या त्रिष्टुप्। १३१ इंद्राय सप्त। १३२ त्वया षड्युवंतमैंद्रापार्वतोऽर्धर्चः। १३३ उभे सप्ताद्यौ त्रिष्टुब्स्तिस्रोऽनुष्टुभो गायत्री धृतिरष्टिः। १३४ आ त्वा षड्वायव्यं त्वंत्याष्टिः। १३५ स्तीर्णं नव चतुर्थ्याद्याः पंचैंद्रवायवोऽंत्ये अष्टी। १३६ प्र सु सप्त मैत्रावरुणं त्वंत्ये लिंगोक्तदेवस्ये अंत्या त्रिष्टुप्॥ [९] (मन्त्राः १३७)

१३७ सुषुम तृचमतिशाक्वरं। १३८ प्रप्र चतुष्कं पौष्णं। १३९ अस्तु श्रौषळेकादश वैश्वदेवी मैत्रावरुण्याश्विन्यस्तिस्र ऐंद्र्याग्नेयी मारुत्यैंद्राग्नी बार्हस्पत्या वैश्वदेव्यंत्या त्रिष्टुप्पंचमी बृहती वैश्वदेवमेतदेवमन्यासामपि सूक्तप्रयोगे वैश्वदेवत्वं सूक्तभेदप्रयोगे यल्लिंगं सा देवता। १४० वेदिषदे सप्तोना दीर्घतमा औचथ्य आग्नेयं तु द्विस्त्रिष्टुबंतं तु त्रिष्टुब्दशमी वा। १४१ बळित्था। १४२ समिद्ध आप्रिय आनुष्टुभमंत्यैंद्री। १४३ प्र तव्यसीमष्टावाग्नेयं तु तस्त्रिष्टुबंतं। १४४ एति प्र सप्त जागतं। १४५ तं पृच्छत पंचांत्या त्रिष्टुप्। १४६ त्रिमूर्धानं। १४७ कथा। १४८ मथीद्यत्। १४९ महः स वैराजं। १५० पुरु तृचमौष्णिहं। १५१ मित्रं नव मैत्रावरुणं हि जागतं मैत्र्याद्या। १५२ युवं सप्त। १५३ यजामहे चतुष्कं। १५४ विष्णोः षड्वैष्णवं हि। १५५ प्र वो जागतं त्वैंद्रश्चाद्यस्तृचः। १५६ भव पंच। १५७ अबोधि षळाश्विनं त्वंत्ये त्रिष्टुभौ॥ [१०] (मन्त्राः १४३)

१५८ वसू अंत्यानुष्टुप्। १५९ प्र द्यावा पंच द्यावापृथिवीयं तु जागतं तु। १६० ते हि। १६१ किमु श्रेष्ठः षळूनार्भवं त्रिष्टुबंतं। १६२ मा नो द्व्यधिकाश्वस्तुतिस्तु तृतीयाषष्ठ्यौ जगत्यौ। १६३ यदक्रंदः सप्तोना। १६४ अस्य द्विपंचाशदल्पस्तवं श्वेतरसंशयोत्थापनप्रश्नप्रतिवाक्यान्यत्र प्रायेण ज्ञानमोक्षाक्षरप्रशंसा च पंचपादं साकंजानां यद्वायत्रेऽयं स शिंक्ते सप्ताधगर्भा गौरीरिति जगत्यः। एतदंतं वैश्वदेवं तस्याः समुद्रा इति वाचः समुद्रा आपोऽक्षरं सा प्रस्तारपंक्तिः शकमयमिति शकधूम उक्षाणं पृश्निमिति सोमस्त्रयः केशिन इत्यग्निः सूर्यो वायुश्च केशिनश्चत्वारि वाग्वाच इंद्रं मित्रं सौर्यौ द्वादशेति संवत्सरसंस्थं कालचक्रवर्णनं यस्ते सरस्वत्यै यज्ञेन साध्येभ्यः परानुष्टुप्सौरी पर्जन्याग्निदेवता वांत्या सरस्वते सूर्याय वा। १६५ कया पंचोना संवादोऽगस्त्येंद्रमरुतां तृतीयाद्ययुजो मरुतां वाक्यमंत्यस्तृचोऽगस्त्यस्य शिष्टा इंद्रस्यैकादशी च मरुत्वांस्त्विंद्रो देवता॥ [११] (मन्त्राः १३२)

---

(१०५) त्रिष्टुबंतं। (११०) पंचम्यंते। (१२०) पंचम्यौ। का राधद्द्वादशांत्या दुःस्वप्ननाशिनी गायत्र्यानुष्टुभौष्णिहा द्वृचा विष्टारबृहती कृतिर्विराट् तिस्रो गायत्र्यो द्वितीयोष्णिग्वा तृतीयाचतुर्थ्यौ काविराण्नष्टरूप्यौ पंचमी तनुशिरा वा। (१२५) उप चरंति। (१२९) अतिशक्वर्याष्ट्यंत्या। (१३२) त्वया वयं। (१३६) ०देवते। (१४८) मथीत्। (१५९) द्यावापृथिव्यं। (१६४) ०एतदंतं तु। (१६५) ०संवादसूक्तीयाद्याऽग०। ०संवादस्तृतीया०। च शिष्टा०।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



१६६ तन्नवगस्त्यो मारुतं हि द्वित्रिष्टुबंतं मित्रावरुणयोर्दीक्षितयोरुर्वशीमप्सरसं दृष्ट्वा वासतीवरे कुंभे रेतोऽपतत्ततोऽगस्त्य–वसिष्ठावजायेतां। १६७ सहस्रमेकादशाद्यैंद्री। १६८ यज्ञायज्ञा दश त्रित्रिष्टुबंतं। १६९ महोऽष्टौ द्वितीया विराट्। १७० न नूनं पंचागस्त्येनैन्द्रे हविषि मरुतामुद्यत इंद्रागस्त्ययोः संवाद ऐन्द्रस्तत्राद्या तृतीया चैंद्रवाक्यं चतुर्थी चादौ बृहती तिस्रोऽनुष्टुभः। १७१ प्रति वः षण्मारुतं तु चतस्रोंऽत्या मरुत्वतीयाः। १७२ चित्रस्तृचं गायत्रं। १७३ गायत्सप्तोना। १७४ त्वं राजा दश। १७५ मत्सि षळानुष्टुभं तु त्रिष्टुबंतं त्वाद्या स्कंधोग्रीवा। १७६ मत्सि नः। १७७ आ चर्षणि प्राः पंच। १७८ यद्ध स्या। १७९ पूर्वीः षड् जाया-पत्योर्लोपामुद्राया अगस्त्यस्य च द्वचाभ्यां रत्यर्थं संवादं श्रुत्वांतेवासी ब्रह्मचार्यंत्ये बृहत्यादी अपश्यत्। १८० युवोर्दशाश्विनं वै। १८१ कदु नव। १८२ अभूदिदमष्टौ षष्ठ्यंत्ये त्रिष्टुभौ। १८३ तं युंजाथां षट्॥ [१२] (मन्त्राः १४२)

१८४ ता वां। १८५ कतरैकादश द्यावापृथिवीयं। १८६ आ नो वैश्वदेवं। १८७ पितुं न्वन्नस्तुतिर्गायत्रं त्वाद्यानुष्टुब्गर्भा तृतीया पंचम्याद्याश्च तिस्रोऽनुष्टुभोंऽत्या च बृहती वा। १८८ समिद्ध आप्रियः। १८९ अग्ने नयाष्टावाग्नेयं। १९० अनर्वाणं बार्हस्पत्यं। १९१ कंकतः षोळशोपनिषदानुष्टुभमप्तृणसौर्यं विषशंकावानगस्त्यः प्राब्रवीद्दशम्याद्यास्तिस्रो महापंक्त्यो महाबृहती च॥

॥ शतर्चिनां मण्डलं तु समाप्तं प्रथमं त्विति॥ [प्रथममण्डलस्य मन्त्राः २००६]

य आंगिरसः शौनहोत्रो भूत्वा भार्गवः शौनकोऽभवत्स गृत्समदो द्वितीयं मंडलमपश्यत्। १ त्वमग्ने जागतं तु। २ यज्ञेन सप्तोना। ३ समिद्ध एकादशाप्रं सप्तमी जगती। ४ हुवे नव सोमाहुतिर्भार्गवो ह। ५ होताष्टावानुष्टुभं। ६ इमां मे गायत्रं हि। ७ श्रेष्ठं षट्। ८ वाजयन्निवांत्यानुष्टुप्॥ [१३] (मन्त्राः १५९)

९ नि होता। १० जोहूत्रः। ११ श्रुधि सैकेंद्रं विराट्स्थानमूर्तेंऽत्यां। १२ यो जातः पंचोना। १३ ऋतुः सप्तोनांत्या त्रिष्टुप्। १४ अध्वर्यवो द्वादश। १५ प्र व दश। १६ प्र वो नवांत्या त्रिष्टुप्। १७ तदस्मै द्वित्रिष्टुबंतं। १८ प्रातः। १९ अपायि। २० वयं ते स नो विराड्रूपा। २१ विश्वजिते षट् त्रिष्टुबंतं। २२ त्रिकद्रुकेषु चतुष्कमष्ट्याद्यतिशाक्करमंत्याष्टिर्वा। २३ गणानामेकोना ब्राह्मणस्पत्यं ह बार्हस्पत्यास्तु दृष्टलिंगाः पंचदश्यंत्ये त्रिष्टुभौ॥ [१४] (मन्त्राः १५७)

२४ सेमां षोळशांत्या त्रिष्टुब्द्वादशी च सैंद्री च। २५ इंधानः पंच जागतं तु। २६ ऋजुश्चतुष्कं। २७ इमा–स्त्यूना कूर्मो गार्त्समदो हि वादित्येभ्यः। २८ इदमेकादश वारुणं। २९ धृतव्रताः सप्त वैश्वदेवं। ३० ऋतमेकादश जगत्यंतं षष्ठ्यैंद्रासौमी सरस्वति त्वमिति सारस्वतोऽर्धर्चो यो नो बार्हस्पत्या तं वो मारुती। ३१ अस्माकं सप्त वैश्वदेवं त्रिष्टुबंतं। ३२ अस्य मेऽष्टौ जागतं द्व्यनुष्टुबंतं द्यावापृथिव्यैका द्वे ऐंद्र्यौ त्वाष्ट्र्यौ वा द्वे द्वे राकासिनीवाल्योरन्त्या लिंगोक्तदेवता। ३३ आ ते पंचोना रौद्रं। ३४ धारावरा मारुतं त्रिष्टुबंतं। ३५ उपेमपोनप्त्रीयं। ३६ तुभ्यं षळृतव्यं तु जागतं तु॥ [१५] (मन्त्राः १३७)

३७ मंदस्व। ३८ उदु ष्य एकादश सावित्रं। ३९ ग्रावाणेवाष्टावाश्विनं। ४० सोमापूषणा षट् सोमापौष्णमंत्योऽर्धर्चोऽप्यदितेः। ४१ वायो सैका गायत्रमुक्ता देवताः प्रउगेणाद्ये तु तृचेऽत्यैंद्रवायवी द्यावापृथिव्योंऽत्यस्तृचो हाविर्धानो वा तृतीयः पादो वाग्नेयोऽवितमेऽनुष्टुभौ बृहती च। ४२ कनिक्रदत्तृचं। ४३ प्रदक्षिणिज्जागतं मध्येऽतिशक्वर्यष्टिर्वा। एताभ्यामृषिरध्वनि वाश्यमानं शकुंतं तुष्टाव॥

॥ इति गार्त्समदं द्वितीयं मंडलं समाप्तम्॥ [द्वितीयमण्डलस्य मन्त्राः ४२९]

---

(१६९) ०विराट्पंक्तिः। (१७०) वादौ च बृहती। (१८७) (ऋग्विधाने, १।२६।६॥) तृतीयांत्ये। ०अंत्या बृहतीवानुष्टुभा। (१९१) ०दशम्याद्याश्च तिस्रो०। ०निषदप्तृणसौर्यमानुष्टुभं।

(३) षष्ठ्यादि जगत्यः; जगत्यौ। (२३) ब्राह्मणस्पत्यं ह। (२७) इमा गिरः। वादित्यं। (२८) वारुणमुपांत्या दुःस्वप्ननाशिनी। (३०) षष्ठ्यैंद्रासोमी...... नो बृहस्पतिस्तवोंऽत्या। (३५) ०नप्त्रियं, ०नप्त्र्यं।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



कुशिकस्त्वैषीरथिरिंद्रतुल्यं पुत्रमिच्छन्ब्रह्मचर्यं चचार तस्येंद्र एव गाथी पुत्रो जज्ञे गाथिनो विश्वामित्रः स तृतीयं मंडलमपश्यत्। १ सोमस्य त्र्यधिका। २ वैश्वानराय पंचोना वैश्वानरीयं तु जागतं तु। ३ वैश्वानरायैकादश। ४ समित्समिदाप्रियः। ५ प्रत्यग्निः। ६ प्र कारवः। इत्याग्नेययोरन्यासामपि निपातो दृश्यते ॥ [ १६ ] ( मन्त्राः १४० )

[ द्वितीयोऽष्टकः। मन्त्राः ११४७ ]

७ प्र ये। ८ अंजंति यूपस्तुतिः षष्ठ्याद्याभिर्बहवोऽस्या व्रश्चिन्यष्टमी वैश्वदेवी वा तृतीयासप्तम्यावनुष्टुभौ। ९ सखायो नव बार्हतं त्रिष्टुबंतं। १० त्वामग्न औष्णिहं। ११ अग्निर्होता गायत्रं तु। १२ इंद्राग्नी ऐंद्राग्नं। १३ प्र वः सप्त ऋषभस्त्वानुष्टुभं। १४ आ होता। १५ वि पाजसा कात्य उत्कीलस्तु। १६ अयमग्निः षट् प्रागाथं। १७ समिध्यमानः पंच कतो वैश्वामित्रस्तु। १८ भवा नः। १९ अग्निं होतारं गाथी ह। २० अग्निमुषसमाद्यांत्ये वैश्वदेव्यौ। २१ इमं न उपाद्ये अनुष्टुभौ विराड्रूपा सतोबृहती चांत्या। २२ अयं स उपांत्यानुष्टुप्पुरीष्येभ्योऽग्निभ्यः। २३ निर्मथितो देवश्रवा देववातश्च भारतौ तृतीया सतोबृहती। २४ अग्ने सहस्व गायत्रमाद्यानुष्टुप्। २५ अग्ने दिवो वैराजमुपांत्याग्नेंद्री। २६ वैश्वानरं नव तृचौ वैश्वानरीयमारुतौ जागतौ द्वृच आत्मस्तुतिर्वा पूर्वात्मगीतांत्योपाध्यायस्तुतिः। २७ प्र वः पंचोना गायत्रं त्वृतव्या वाद्या। २८ अग्ने जुषस्व षट् तृतीयाद्युष्णिक् त्रिष्टुब्जगत्यः। २९ अस्तीदं षोळशाद्याचतुर्थीदशमीद्वादश्योऽनुष्टुभः षष्ठ्येकादश्युपांत्ये च जगत्यः पंचम्यृत्विग्भ्यो वा ॥ [ १७ ] ( मन्त्राः १७६ )

३० इच्छंति त्र्यधिकैंद्रं। ३१ शासत्कुशिको विश्वामित्र एव वा श्रुतेः। ३२ इंद्र सोमं न्यूना। ३३ प्र पर्वतानां सप्तोना संवादो नदीभिर्विश्वामित्रस्योक्तितीयोऽस्तत्र नदीवाक्यं चतुर्थीषष्ठ्यष्टमीदशम्यः षष्ठीसप्तम्योस्त्विंद्रस्तुतिरंत्यानुष्टुप्। ३४ इंद्रः पूर्भिदेकादश। ३५ तिष्ठा हरी। ३६ इमामू पूपांत्यां घोरोऽपश्यत्सप्ता निर्देहेच्छस्यमानेति श्रूयते। ३७ वार्त्रहत्याय गायत्रमंत्यानुष्टुप्। ३८ अभि तष्टेव दश प्रजापतिः स वैश्वामित्रो वाच्यो वा द्वौ वा तौ न वैकोऽपि। ३९ इंद्रं मतिर्नव ॥ [ १८ ] ( मन्त्राः १३७ )

४० इंद्र त्वा गायत्रं हि। ४१ आ तू नः। ४२ उप नः। ४३ आ याह्यष्टौ। ४४ अयं ते पंच बार्हतं तु। ४५ आ मंद्रैः। ४६ युध्मस्य। ४७ मरुत्वान्। ४८ सद्यो ह। ४९ शंसा महां। ५० इंद्रः स्वाहा। ५१ चर्षणीधृतं द्वादशाद्यांत्यौ तृचौ जागतगायत्रौ। ५२ धानावंतमष्टौ पूर्वार्धं गायत्रं षष्ठी जगती। ५३ इंद्रापर्वता चतुर्विंशतिराद्यैंद्रापार्वती पंचदश्यादिद्वे वाचे ससर्पर्यै चतस्रो रथांगस्तुतयोऽस्या अभिशापास्ता वसिष्ठद्वेषिण्यो न वसिष्ठाः शृण्वंति। दशमीषोळश्यौ जगत्यौ त्रयोदशी गायत्री द्वादशीविंशीद्वाविंश्योऽनुष्टुभोऽष्टादशी बृहती। ५४ इमं महे त्र्यधिकोक्तगोत्रः प्रजापतिर्हि वैश्वदेवं ह। ५५ उषसः ॥ [ १९ ] ( मन्त्राः १५८ )

५६ न ताष्टौ। ५७ प्र मे षट्। ५८ धेनुर्नवाश्विनं। ५९ मित्रो मैत्रं चतुर्गायत्र्यंतं। ६० इहेह वः सप्तार्भवं जागतं तृचोऽस्य ऐंद्रश्च। ६१ उष उषस्यं। ६२ इमा उ द्व्यूनैंद्रावरुणबार्हस्पत्यपौष्णसावित्रसौम्यमैत्रावरुणास्तृचा अंत्यो जमदग्न्यार्षो वा चतुर्थ्याद्या गायत्र्यः ॥

॥ इति वैश्वामित्रं तृतीयं मंडलं समाप्तम् ॥ [ तृतीयमण्डलस्य मन्त्राः ६१७ ]

× वामदेवो गौतमश्चतुर्थं मंडलमपश्यत्। १ त्वां ह्यग्ने विंशतिरष्ट्यतिजगतीष्वतय आद्या उपाद्याश्चतस्रो वारुण्यश्च वा। २ यो मर्त्येषु। ३ आ वः षोळशाद्या रौद्री। ४ कृणुष्व पंचोना राक्षोघ्नं ॥ [ २० ] ( मन्त्राः १३५ )

५ वैश्वानराय वैश्वानरीयं। ६ ऊर्ध्व ऊ ष्वेकादश। ७ अयमिहाद्यौ जगती पंचानुष्टुभः। ८ दूतं वोऽष्टौ गायत्रं तु। ९ अग्ने मृळ। १० अग्ने तमद्य पदपांक्तं पंचमी महापदपंक्तिरंत्योष्णिक् चतुर्थी षष्ठ्युपांत्या वा सप्तम्याः पंचकौ मुख्यौ तृतीयः सप्तको नवकश्चाष्टम्याः पंचकः पादश्चतुष्कः सप्तकस्त्रैष्टुभश्च। ११ भद्रं षट्। १२ यस्त्वां। १३ प्रत्यग्निः पंच लिंगोक्तदैवतं त्वेके। १४ प्रत्यग्निः। १५ अग्निर्होता दश गायत्रमृषिर्बोधदित्याभ्यां सोमकं साहदेव्यमभ्यवदत्पराभ्या-

( १५ ) कात्योत्की०  ( ५३ ) अभिशापार्थास्ता।  ( ६० ) इहेह सप्तार्भवं।  ( ६१ ) उष औषस्यं।
( १५ ) गायत्रमृषिर्बोधदिति द्वाभ्यां। × यः पूजयितुं देवपितृमनुष्यान् पेचे आन्त्राणि शुनः श्येनरूपेणेन्द्रो वृष्ण्यं समाहरन्मधु यस्य गौतमो ब्राह्मणो ऋषिः।

CC-0. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



मत्स्याश्विनावायुरयाचत। २६ आ सत्यः सैकैंद्रं। २७ त्वं महाँ असिकन्यामेकपदा। २८ अयं पंथाः सप्तोना संवाद इंद्रादितिवामदेवानां॥ [२१] ( मन्त्राः १४८ )

१९ एवैकादश। २० आ नः। २१ आ यातु। २२ यन्नः। २३ कथोपांत्यास्तिस्र ऋतदेव्यो वा। २४ का सुष्टुतिरुपांत्यानुष्टुप्। २५ को अद्याष्टौ। २६ अहं मनुः सप्ताद्याभिस्तिसृभिरिंद्रमिवात्मानमृषिस्तुष्टावेंद्रो वात्मानं परा नवाद्यौ वा श्येनस्तुतिः। २७ गर्भे नु पंचांत्या शक्वरी। २८ त्वा युजेंद्रासोमं वा। २९ आ नः स्तुतः। ३० नकिश्चतुर्विंशतिर्दिवाश्चितृच उषस्यश्च गायत्रं द्यष्टम्यंत्ये अनुष्टुभौ। ३१ कया पंचोनाभी षु पादनिचृत्। ३२ आ तू नश्चतुर्विंशतिरंत्याभ्यामिंद्राश्वौ स्तुतौ॥ [२२] ( मन्त्राः १५९ )

३३ प्र ऋभुभ्य एकादशार्भवं वै। ३४ ऋभुर्विभ्वा। ३५ इहोप नव। ३६ अनश्वोऽस्या त्रिष्टुप्। ३७ उप नोऽष्टौ चतुरनुष्टुबंतं। ३८ उतो हि दश दाधिक्रं हि द्यावापृथिव्याद्या। ३९ आशुं षळंत्यानुष्टुप्। ४० दधिक्राव्णः पंच चतस्रोंत्या जगत्योंऽत्या सौरी। ४१ इंद्रा को वामेकादशैंद्रावरुणं तु। ४२ मम द्विता दश त्रसदस्युः पौरुकुत्स्यः षळाद्या आत्मस्तवः। ४३ क उ श्रवत्सप्त पुरुमीळ्हाजमीळ्हौ सौहोत्रौ त्वाश्विनं हि। ४४ तं वां। ४५ एष स्य त्रिष्टुबंतं। ४६ अग्रं वायव्याद्यैंद्रवायवं तु गायत्रं। ४७ वायो चतुष्कमाद्या वायव्यानुष्टुभं तु। ४८ विहि पंच वायव्यं। ४९ इदं वां षळैंद्राबार्हस्पत्यं गायत्रं। ५० यस्तस्तंभैकादश बार्हस्पत्यमंत्ये ऐंद्र्यौ चोपांत्या जगती॥ [२३] ( मन्त्राः १४४ )

५१ इदमुषस्यं तु। ५२ प्रति ष्या सप्त गायत्रं। ५३ तद्देवस्य सावित्रं तु जागतं। ५४ अभूद्देवः षट् त्रिष्टुबंतं। ५५ को वा दश वैश्वदेवं त्रिगायत्र्यंतं तु। ५६ मही सप्त द्यावापृथिवीयं। ५७ क्षेत्रस्याष्टौ तिस्रः क्षेत्रपत्याः शुनायैका परा पुरउष्णिक् सांत्या च शुनासीराभ्यामुपांत्ये सीतायै ते चानुष्टुभावाद्याचतुर्थ्यौ च। ५८ समुद्रादेकादशाग्नेयं जगत्यंतं सौर्यं वापं वा गव्यं वा घृतस्तुतिर्वा॥

॥ इति वामदेव्यं चतुर्थं मंडलं समाप्तम्॥ [ चतुर्थमण्डलस्य मन्त्राः ५८९ ]

नमोऽत्रिभ्यो भौमोऽत्रिः पंचमे मंडलेऽनुक्तगोत्रमात्रेयं विद्यात्पंक्त्यंतस्य च सूक्तस्य शेषमानुष्टुभं। १ अबोधि द्वादश बुधगविष्ठिरौ। २ कुमारं कुमारो वृशो वा जान उभौ वा शक्वर्यंतं कं वीत्यृचोस्तु वृश एव। ३ त्वमग्ने वसुश्रुतः +। ४ त्वामग्न एकादश। ५ सुसमिद्धायाप्रं गायत्रं। ६ अग्निं तं दश पांक्तं। ७ सखाय इषः पंक्त्यंतं। ८ त्वामग्ने सप्त जागतं॥ [२४] ( मन्त्राः १५२ ) [ इति तृतीयोऽष्टकः। मन्त्राः १२०९ ]

९ त्वामग्ने गयोंऽत्यापंचम्यौ पंक्ती। १० अग्न ओजिष्ठमंत्याचतुर्थ्यौ च। ११ जनस्य षट् सुतंभरो जागतं। १२ प्राग्नये। १३ अर्चंतो गायत्रं तु। १४ अग्निं स्तोमेन। १५ प्र वेधसे पंचांगिरसो धरुणः। १६ बृहत्पूरुः पंक्त्यंतं हि। १७ आ य॒ज्ञैः। १८ प्रातर्मृक्तवाहा द्वितः। १९ अभ्यवस्था वव्रिर्गायत्र्यावनुष्टुभौ विराड्रूपा। २० यमग्ने चतुष्कं प्रयस्वंतः पंक्त्यंतं ह। २१ मनुष्वत्ससः। २२ प्र विश्वसामान्विश्वसामा। २३ अग्ने द्युम्नो विश्वचर्षणिः। २४ अग्ने त्वं गौपायना लौपायना वा बंधुः सुबंधुः श्रुतबंधुर्विप्रबंधुश्चैकर्चा द्वैपदं। २५ अच्छा वो नव वसूयव आनुष्टुभं। २६ अग्ने गायत्रमन्त्या लिंगोक्तदेवता। २७ अनस्वंता षट् त्रैवृष्णपौरुकुत्स्यौ द्वौ त्र्यरुणत्रसदस्यू राजानौ भारताश्वमेधोंऽत्यास्तिस्रोऽनुष्टुभो नात्मात्मने दद्यादिति सर्वास्वत्रिं केचिदंत्यैंद्राग्नी। २८ समिद्धो विश्ववारात्रेयी त्रिष्टुब्जगती त्रिष्टुबनुष्टुब्गायत्र्यौ। २९ त्र्यर्यमा पंचोना गौरिवीतिः शाक्त्य ऐंद्रमुशना यदौशनसो वा पादः। ३० क्व स्य बभ्रुरैंद्रं-

---

( २८ ) युजेंद्रासोमं। ( ३० ) द्यष्टम्यंते। ( ४२ ) आत्मसंस्तवः। ( ४७ ) ०मानुष्टुभं त्वाद्या वायव्या। ( ५७ ) आद्या चतुर्थी च; ते अनुष्टुभावाद्या च चतुर्थी च।

+ ( ३ ) आद्या विराट् तृतीया मारुतरौद्रावैष्णवी।

( १० ) अंत्या चतुर्थी च। ( २१ ) मनुष्वत्ससः। ( २२ ) प्र विश्वसामा। ( २६ ) अंत्या वैश्वदेवी; अंत्या वैश्वदेवी वा। ( २७ ) वृष्णिपौरुकुत्स्यौ। त्रैवृष्णः पौरुकुत्स्यो०।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations


चयोऽप्यत्र राजा स्तुतः। ३१ इंद्रो रथाय सप्तोनावस्युरुप्रमिति कौत्स्यौशनसौ वा पादौ परैंद्राकौत्सी। ३२ अदर्दर्द्वादश गातुः ॥ २५ ॥ ( मन्त्राः १६८ )

३३ महि दश प्राजापत्यः संवरणः। ३४ अजातशत्रुं नव त्रिष्टुबंतं। ३५ यस्तेऽष्टौ प्रभूवसुरांगिरसः पंक्त्यंतं। ३६ स आ गमत् षट् तृतीया जगती। ३७ सं भानुना पंचात्रिः। ३८ उरोरानुष्टुभं। ३९ यदिंद्र पंक्त्यंतं। ४० आ याहि नव स्युष्णिगाद्यंत्यानुष्टुम्मध्ये च सा सौरी तदादीतिहासः स्तुतिकर्मत्वादत्रिर्देवतैव। ४१ को नु विंशतिर्वैश्वदेवं वै तत् षोळश्याद्यातिजगत्यावंत्यैकपदा। ४२ प्र शंतमा द्व्यूनैकादशी रौद्री। ४३ आ धेनवस्त्र्यूना। एतयोरुपांत्यैकपदा! ४४ तं प्रत्नथा पंचोना काश्यपोऽवत्सारोऽन्ये च ऋषयोऽत्र दृष्टलिंगा द्वित्रिष्टुबंतं। ४५ विदा एकादश सदापृणः। ४६ हयोऽष्टौ प्रतिक्षत्रोंऽत्यो द्वृचो देवपत्नीस्तवोंऽत्या त्रिष्टुब्द्वितीया च ॥ [ २६ ] ( मन्त्राः १४६ )

४७ प्रयुंजती सप्त प्रतिरथः। ४८ कदु पंच प्रतिभानुर्जागतं। ४९ देवं वः प्रतिप्रभोंऽत्या तृणपाणिः। ५० विश्वः स्वस्त्यात्रेयः पंक्त्यंतं। ५१ अग्ने पंचोना चतस्रो गायत्र्यः षळुष्णिहस्तिस्रो जगत्यस्त्रिष्टुभो वांत्ये अनुष्टुभौ। ५२ प्र श्यावाश्व न्यूना श्यावाश्वो मारुतं ह तत्पंक्तिः षष्ठ्यंत्ये च। ५३ को वेद षोळश ककुब्बृहत्यनुष्टुप्पुरउष्णिक् ककुप्सतोबृहत्यौ गायत्री सतोबृहती ककुभौ गायत्री सतोबृहत्यौ ककुप्सतोबृहती। ५४ प्र शर्धाय पंचोना जागतमुपांत्या त्रिष्टुप्। ५५ प्रयज्यवो दशांत्या त्रिष्टुप्। ५६ अग्ने नव बार्हतं तृतीयासप्तम्यौ सतोबृहत्यौ। ५७ आ रुद्रासोऽष्टौ द्वित्रिष्टुबंतं। ५८ तमु। ५९ प्र वस्त्रिष्टुबंतं। ६० ईळे द्विजगत्यंतमाग्नेयं च वा। ६१ के ष्ठैकोना गायत्रं श्यावाश्वोऽत्र वैददश्वी तरंतपुरुमीळ्हौ दाल्भ्यं रथवीतिं मरुतश्च दानतुष्टः प्रशशंस बुद्ध्वा च तरंतमहिषीं शशीयसीं पंचम्यनुष्टुब्नवमी सतोबृहती। ६२ ऋतेन नव श्रुतविन्मैत्रावरुणं वै तत् ॥ २७ ॥ ( मन्त्राः १६४ )

६३ ऋतस्य सप्तार्चनाना जागतं। ६४ वरुणं पंक्त्यंतं तु। ६५ यश्चिकेत षड्रातहव्यः। ६६ आ चिकितानानुष्टुभं तु। ६७ बळित्था पंच यजतः। ६८ प्र वो गायत्रं। ६९ त्री रोचना चतुष्कमुरुचक्रिः। ७० पुरूरुणा गायत्रं तु। ७१ आ नस्तृचं बाहुवृक्तः। ७२ आ मित्रे औष्णिहं। ७३ यदद्य दश पौर आश्विनं तदानुष्टुभं तु। ७४ कूष्ठः। ७५ प्रति नवावस्युः पांक्तं। ७६ आ भाति पंचात्रिः। ७७ प्रातर्यावाणा। ७८ अश्विनौ नव सप्तवध्रिस्त्र्युष्णिगादि चतुर्थी त्रिष्टुप्पंचानुष्टुभोंऽत्याः पंच गर्भस्राविण्युपनिषत्। ७९ महे दश सत्यश्रवा उषस्यं तु पांक्तं। ८० द्युतद्यामानं षट्। ८१ युंजते पंच श्यावाश्वः सावित्रं तु जागतं। ८२ तत्सवितुर्नव गायत्रमाद्यानुष्टुप्। ८३ अच्छ दशात्रिः पार्जन्यमुपाद्यास्तिस्रो जगत्य उपांत्यानुष्टुप्। ८४ बळित्था तृचं पार्थिवमानुष्टुभं। ८५ प्र सम्राजेऽष्टौ वारुणं। ८६ इंद्राग्नी षळैंद्राग्नमानुष्टुभं विराट्पूर्वांतं। ८७ प्र वो नवैवयामरुन्मारुतमतिजागतं।

॥ इति आत्रेयं पंचमं मंडलं समाप्तम् ॥ [ पञ्चममण्डलस्य मन्त्राः ७२७ ]

बार्हस्पत्यो भरद्वाजः षष्ठं मंडलमपश्यत्। १ त्वं ह्यग्ने सप्तोना ॥ [ २८ ] ( मन्त्राः १७७ )

२ त्वं ह्येकादशानुष्टुभं शक्वर्यंतं। ३ अग्नेऽष्टौ। ४ यथा होतः। ५ हुवे सप्त। ६ प्र नव्यसा। ७ मूर्धानं वैश्वानरीयं हि द्विजगत्यंतं। ८ पृक्षस्यांत्या त्रिष्टुप्। ९ अहश्च। १० पुरो वो द्विपदांतं। ११ यजस्व षट्। १२ मध्ये। १३ त्वद्विश्वा। १४ अग्ना य आनुष्टुभं शक्वर्यंतं। १५ इममू ष्वेकोना वीतहव्य ऋषिर्वा जागतं प्राग्दशम्यास्तृतीयापंचदश्यौ शक्वर्यौ षष्ठ्यतिशक्वर्यनुष्टुब्बृहत्या उपांत्ये। १६ त्वमग्नेऽष्टाचत्वारिंशद्गायत्रं वर्धमानाद्या षष्ठी च सप्तविंश्यनुष्टुप्त्रिष्टुप्पूर्वे चांत्ये ॥ [ २९ ] ( मन्त्राः १६० )

---

( ४० ) तदादीतिहासः स०। अत्रिरेव देवः। ( ५१ ) ० पंचोना चतुर्थ्यैन्द्रवायवी वायव्यैकैंद्रवायव्यौ गा०। ( ५२ ) षष्ठ्यंते च; अंत्या च। ( ६१ ) दार्भ्यं। ( ७८ ) त्रिष्टुप्पंचांत्या अनुष्टुभो गर्भस्राविण्यः; त्रिष्टुप्पंचानुष्टुभः। ( ७ ) वैश्वानरं।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



१७ पिब पंचोनैंद्रं त्रैष्टुभं द्विपदांतं। १८ तमु ष्टुहि। १९ महाँस्सप्तोना। २० द्यौर्न वि विप्रोर्विराट्। २१ इमा उ द्वादश नवम्येकादश्यौ वैश्वदेव्यौ। २२ य एक एकादश। २३ सुत इद्दश। २४ वृषा। २५ या ते नव। २६ श्रुधी नोऽष्टौ। २७ किमस्यांत्या चायमानस्याभ्यावर्तिनो दानस्तुतिः। २८ आ गावो गव्यं द्वितीयैंद्री वांत्यश्च पादोंऽस्यानुष्टुब्जागतस्तृचो द्वितीयादिः ॥ [ ३० ] ( मन्त्राः १३२ )

२९ इंद्रं षट्। ३० भूयः पंच। ३१ अभूरेकः सुहोत्रस्तु चतुर्थी शक्वरी। ३२ अपूर्व्या। ३३ य ओजिष्ठः शुनहोत्रस्तु। ३४ सं च त्वे। ३५ कदा नरस्तु। ३६ सत्रा। ३७ अर्वाक्। ३८ अपात्। ३९ मंद्रस्य। ४० इंद्र पिब। ४१ अहेळमानः। ४२ प्रत्यस्मै चतुष्कमानुष्टुभं बृहत्यंतं। ४३ यस्यौष्णिहं। ४४ यो रयिवश्चतुर्विंशतिः शंयुर्बार्हस्पत्यो ह्याद्यौ षळनुष्टुभस्तिस्रश्च विराजो मध्यमैव वासां। ४५ य आनयत्त्रयस्त्रिंशद्गायत्रं पुरूतममतिनिचृदधि बृबुः पादनिचृदंत्यानुष्टुप्तृचेंऽत्ये बृबुस्तक्षा दैवतं। ४६ त्वामिद्धि षळूना प्रागाथं। ४७ स्वादुरेकत्रिंशद्गर्गः पंचाद्यौ सौम्योऽगव्यूत्यर्धर्चो लिंगोक्तदेवतः प्रस्तोक इति त्रिष्टुबनुष्टुब्गायत्री द्विपदा साञ्जयस्य प्रस्तोकस्य दानस्तुतिः परौ तृचौ रथदुंदुभिदेवत्यावैंद्रोंऽत्योऽर्धर्चो युजानो बृहती त्रिष्टुम्महि द्विपदा दिवस्पृथिव्या जगती ॥ [ ३१ ] ( मन्त्राः १७६ )

४८ यज्ञायज्ञा द्व्यधिका शंयुस्तृणपाणिकं पृश्निसूक्तं प्रगाथौ बृहती महासतोबृहती महाबार्हतबार्हतौ प्रगाथाविस्याग्नेयः काकुभः प्रगाथः पुरउष्णिग्बृहत्यतिजगतीति मारुत्योंऽत्यास्तिस्रो वासां लिंगोक्तदेवताः काकुभः प्रगाथः पुरउष्णिग्बृहतीति पौष्ण्यो बृहती महाबृहती यवमध्यांत्यानुष्टुम्मारुत्योंऽत्या द्यावाभूम्योर्वा पृश्नेर्वा। ४९ स्तुषे पंचोन ऋजिश्वा ह वैश्वदेवं ह शक्वर्यंतं। ५० हुवे वः। ५१ उदुत्यत्षोळश त्र्युष्णिगनुष्टुबंतं। ५२ न तस्यूना सप्तम्याद्याः षड्गायत्र्यश्चतुर्दशी जगती। सुहोत्रादयोऽनुक्तगोत्रा भारद्वाजाः पौत्रा बृहस्पतेर्दौःषंतेर्वा भरतस्य। ५३ वयं दश पौष्णं तद्गायत्रं वै यां पूषन्ननुष्टुप्। ५४ सं पूषन्। ५५ एहि वां षट्। ५६ य एनमंत्यानुष्टुप्। ५७ इंद्रा न्वैंद्रं च। ५८ शुक्रं चतुष्कं द्वितीया जगती। ५९ प्र नु दशैंद्राग्नं तु बार्हतं चतुरनुष्टुबंतं। ६० श्नथत्पंचोना गायत्रं तु त्रित्रिष्टुबादि त्रिष्टुब्बृहत्यनुष्टुबंतं। ६१ इयं षळूना सारस्वतं त्रिजगत्यादि जगतीत्रिष्टुबंतं ॥ [ ३२ ] ( मन्त्राः १६६ ) [ इति चतुर्थोऽष्टकः। मन्त्राः १२८९ ]

६२ स्तुष एकादशाश्विनं तु। ६३ क्व त्यैकपदांतं त्रैष्टुभं। ६४ उदु श्रिये षळुषस्यं तु। ६५ एषा स्या। ६६ वपुर्न्वेकादश मारुतं। ६७ विश्वेषां मैत्रावरुणं। ६८ श्रुष्टी वामैंद्रावरुणमुपांत्ये जगत्यौ। ६९ सं वामष्टावैंद्रावैष्णवं। ७० घृतवती षट् द्यावापृथिवीयं जागतं। ७१ उदु ष्य सावित्रं त्रित्रिष्टुबंतं। ७२ इंद्रासोमा पंचैंद्रासोमं। ७३ यो अद्रिभित्तृचं बार्हस्पत्यं। ७४ सोमारुद्रा चतुष्कं सौमारौद्रं। ७५ जीमूतस्येवैकोना पायुर्भारद्वाजः संग्रामांगान्यृक्शोऽभितुष्टाव वर्म धनुर्ज्यामार्त्नी इषुधिं जगत्यर्धे सारथिमर्धे रश्मीनश्वान् रथं रथगोपान्जगत्याद्या लिंगोक्तदेवता द्वाभ्यामिषून् प्रतोदं हस्तघ्नं द्वाभ्यामिषून् पराः पंक्त्यादयो लिंगोक्तदेवताः संग्रामाशिषोंऽत्यानुष्टुबृजीत आलाक्तेति च द्वे द्वे ॥

॥ इति भारद्वाजं षष्ठं मंडलं समाप्तम् ॥ ( षष्ठमण्डलस्य मन्त्राः ७६५ )

सप्तमं मंडलं × वसिष्ठोऽपश्यत्। १ अग्निं पंचाधिका विराजोऽष्टादशाद्याः ॥ [ ३३ ] ( मन्त्राः १४३ )

२ जुषस्वैकादशाप्रं। ३ अग्निं वो दश। ४ प्र वः। ५ प्राग्नये नव वैश्वानरीयं तु। ६ प्र सम्राजः सप्त। ७ प्र वो देवं। ८ इंधे। ९ अबोधि षट्। १० उषो न पंच। ११ महान्। १२ अगन्म तृचं। १३ प्राग्नये वैश्वानरीयं। १४ समिधा बृहत्यादि। १५ उपसद्याय पंचोना गायत्रं। १६ एना वो द्वादश प्रागाथं। १७ अग्ने भव सप्त द्वैपदं त्रैष्टुभं। १८ त्वे ह पंचाधिकैंद्रं सुदासः पैजवनस्यांत्याश्चतस्रो दानस्तुतिः। १९ यस्तिग्मशृंग एकादश ॥ [ ३४ ] ( मन्त्राः १६६ )

---

( २८ ) द्वितीयैंद्री चांत्यश्च। ( ४७ ) बृहती त्रिष्टुब्द्विपदा। ( ६३ ) त्रैष्टुभं आद्या विराट्। ( ७४ ) सोमारौद्रं। ( ७५ ) गोपान्जगत्यादि। ताभ्यामिषूः। × योऽद्भ्यः संभूतो वसतीवरीषु गृह्यमाणासु पुष्करे स्थितवान्सर्वतः पुष्करं तत्रं विश्वेदेवा अधारयन्नुत्थापयत्ततो महत्तपश्चकाराद्दष्टमिंद्रमन्यैर्ऋषिभिर्यो द्रष्टुं वाँस्तपसा पूर्वं स्तोमभागान्परितुष्टः शक्रः प्रब्रूते यस्य स गुणतो नाम जज्ञे वसतः श्रैष्ठ्यकर्मणः स।



CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

२० उग्रो दश। २१ असावि। २२ पिब नव वैराजमृतेऽस्यां। २३ उदु षट्। २४ योनिः। २५ आ ते। २६ न सोमः पंच। २७ इंद्रं नरः। २८ ब्रह्माणः। २९ अयं सोमः। ३० आ नः। ३१ प्र वो द्वादश गायत्र त्रिविराळंतं। ३२ मो षु सप्ताधिका प्रागाथं तृतीया द्विपदा सौदासैरग्नौ प्रक्षिप्यमाणः शक्तिरंत्यं प्रगाथमालेभे सोऽर्धर्चं उक्तेऽदह्यत। तं पुत्रोक्तं वसिष्ठः समापयतेति शाट्यायनकं वसिष्ठस्यैव हतपुत्रस्यार्षमिति तांडकं। ३३ श्वित्यंचः षळूना संस्तवो वसिष्ठस्य सपुत्रस्येंद्रेण वा संवादः। ३४ प्र शुक्रा पंचाधिका वैश्वदेवं ह्याद्या एकविंशतिर्द्विपदा अब्जामहेरर्धर्चं उत्तरोऽहिर्बुध्न्याय। ३५ शं नः पंचोना शांतिः॥ [ ३५ ] ( मन्त्राः १५५ )

३६ प्र ब्रह्म नव। ३७ आ वोऽष्टौ। ३८ उदु ष्य सावित्रमंत्ये वाजिन्यौ भगमिति भागो वार्धर्चः। ३९ ऊर्ध्वः सप्त वैश्वदेवं तु। ४० ओ श्रुष्टिः। ४१ प्रातर्भागं जगत्याद्या लिंगोक्तदेवतांत्योषस्या। ४२ प्र ब्रह्माणः षड्वैश्वदेवं तु। ४३ प्र वः पंच। ४४ दधिक्रां दाधिक्रं जगत्याद्या लिंगोक्तदेवता। ४५ आ देवश्चतुष्कं सावित्रं। ४६ इमा रौद्रं त्रिष्टुबंतं। ४७ आपो यमापं। ४८ ऋभुक्षण आर्भवमंत्या वैश्वदेवी वा। ४९ समुद्रज्येष्ठा आपं। ५० आ मां मैत्रावरुण्याग्नेयी वैश्वदेवी नदीस्तुतिर्जागतमंत्यातिजगती शक्करी वा। ५१ आदित्यानां तृचमादित्यं तु। ५२ आदित्यासः। ५३ प्र द्यावा द्यावापृथिवीयं। ५४ वास्तोष्पते वास्तोष्पत्यं। ५५ अमीवहाष्टौ वास्तोष्पत्याद्या गायत्री शेषास्त्युपरिष्टाद्बृहत्यादयोऽनुष्टुभः प्रस्वापिन्य उपनिषत्। ५६ क ईं पंचाधिका मारुतं ह्याद्या एकादश द्विपदाः। ५७ मध्वः सप्त। ५८ प्र साकमुक्षे षट्। ५९ यं गायत्रं द्वादश त्रिप्रगाथादि नवम्याद्या गायत्र्योऽत्यानुष्टुब्रौद्री मृत्युविमोचनी॥ [ ३६ ] ( मन्त्राः १५६ )

६० यदद्य मैत्रावरुणं तु वै सौर्याद्या। ६१ उद्वां सप्त। ६२ उत्सूर्यः षळाद्यास्तिस्रः सौर्यः। ६३ उद्वेतीति चार्धपंचमाः। ६४ दिवि पंच। ६५ प्रति वां। ६६ प्र मित्रयोरेकोना गायत्रं दशम्यादयस्त्रयः प्रगाथाः पुरउष्णिक् चतुर्थ्याद्या दशादित्यास्तिस्रः सौर्यः। ६७ प्रति वां दशाश्विनं तु तत्। ६८ आ शुभ्रा नव सप्ताद्या विराजः। ६९ आ वां रथोऽष्टौ। ७० आ विश्ववारा सप्त। ७१ अप स्वसुः षट्। ७२ आ गोमता पंच। ७३ अतारिष्म। ७४ इमा उ वां षट् प्रागाथं। ७५ व्युषा अष्टा उषस्यं तु वै। ७६ उदु सप्त। ७७ उपो रुरुचे षट्। ७८ प्रति पंच। ७९ व्युषाः। ८० प्रति तृचं॥ [ ३७ ] ( मन्त्राः १५० )

८१ प्रत्यु षट् प्रागाथं। ८२ इंद्रावरुणा दशैंद्रावरुणं ह जागतं तु। ८३ युवां नरा। ८४ आ वां पंच। ८५ पुनीषे। ८६ धीराष्टौ वारुणं ह। ८७ रदत्सप्त। ८८ प्र शुंध्युवमंत्या पाशविमोचनी। ८९ मो षु पंच गायत्रं जगत्यंतं। ९० प्र वीरया सप्त वायव्यं ह्यैंद्रयश्च या द्विवदुक्ताः। ९१ कुविदंग। ९२ आ वायो पंच। ९३ शुचिं न्वष्टावैंद्राग्नं तु। ९४ इयं वां द्वादश गायत्रमंत्यानुष्टुप्। ९५ प्र क्षोदसा षट् सारस्वतं तु तृतीया सरस्वते। ९६ बृहदु प्रगाथः प्रस्तारपंक्तिः परास्तिस्रो गायत्र्यः सरस्वते। ९७ यज्ञे दशैंद्र्यादि बार्हस्पत्यमंत्यैंद्री च तृतीयानवम्यावैंद्राब्राह्मणस्पत्ये। ९८ अध्वर्यवः सप्तोक्तदेवतांत्या। ९९ परो वैष्णवं तूरुमित्यैंद्र्यश्च तिस्रः। १०० नू मर्तः॥ [ ३८ ] ( मन्त्राः १४५ )

१०१ तिस्रः षट् पार्जन्यं तु। १०२ पर्जन्याय तृचं गायत्रं। एते कुमार आग्नेयोऽपश्यद्वसिष्ठ एव वा वृष्टिकामः। १०३ संवत्सरं दश पर्जन्यस्तुतिसंहृष्टान्मंडूकांस्तुष्टावाद्यानुष्टुप्। १०४ इंद्रासोमा पंचाधिकैंद्रासौमं राक्षोघ्नं शापाभिशापप्रायं षट् सप्त वाद्या जगत्य एकविंशीत्रयोविंश्यौ चाष्टादशी मारुती च दशमी चतुर्दश्यावाग्नेय्यौ दैव्येकादश्यंत्यानुष्टुप्नवमी द्वादशी त्रयोदशी सौम्यः सप्तदशी ग्राव्ण्यष्टमीषोळश्यावैंद्र्यौ प्र वर्तयेति चतस्र ऐंद्र्यो मा नो रक्ष इत्यृषेरात्मन आशीरुत्तरोऽर्धर्चः पृथिव्यंतरिक्षदैवतः॥

॥ इति वासिष्ठं सप्तमं मंडलं समाप्तं ॥ ( सप्तममण्डलस्य मन्त्राः ८४१ )

परं गायत्रं प्राग्वत्सप्रेः। ऋषिश्चानुक्तगोत्रः प्राञ्चत्स्याल्काण्वः। १ मा चिच्चतुस्त्रिंशन्मेधातिथिमेध्यातिथी ऐंद्रं बार्हतं

---

(३२) प्रगाथमारेभे। (५४) वास्तोर्वास्तोष्पत्यम्। (१०२) ०गायत्रं द्वितीया पादनिचृत्। (१०३) पर्जन्यस्तुतिः। ( १०४ ) पंचाधिकैंद्रासोमं। ( १ ) प्रायोगिश्चासंगो।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



द्विप्रगाथादि द्वित्रिष्टुबंतमाद्यं द्वृचं प्रगाथोऽपश्यत्स घौरः सन्भ्रातुः कण्वस्य पुत्रतामगात् प्लायोगिश्चासंगो यः स्त्रीभूत्वा पुमानभूत्स मेध्यातिथये दानं दत्वा स्तुहि स्तुहीति चतसृभिरात्मानं तुष्टाव पत्नी चास्यांगिरसी शश्वती पुंस्त्वमुपलभ्यैनं प्रीतांत्यया तुष्टाव। २ इदं वसो द्विचत्वारिंशन्मेधातिथिरांगिरसश्च प्रियमेधः स्वाद्वोऽनुष्टुबंत्याभ्यां मेधातिथिर्विभिंदोर्दानं तुष्टाव। ३ पिब चतुर्विंशतिर्मेध्यातिथिः प्रागाथं त्वनुष्टुप् गायत्र्यौ बृहती चांत्याः कौरयाणस्य पाकस्थाम्नो दानस्तुतिः। ४ यदिंद्र सैका देवातिथिस्तृचोंऽत्यः पुरउष्णिगंतः कुरुंगस्य दानस्तुतिस्तत्पूर्वाश्चतस्रः पौष्ण्यो वा ॥ [ ३९ ] ( मन्त्राः १६५ )

५ दूरादेकोनचत्वारिंशद् ब्रह्मातिथिराश्विने द्विबृहत्यनुष्टुबंतेंऽत्याः पंचार्धर्चाश्चैद्यस्य कशोर्दानस्तुतिः। ६ महाँ इंद्रोऽष्टाचत्वारिंशद्वत्सस्तृचोंऽत्य स्तिरिंदिरस्य पार्शव्यस्य दानस्तुतिः। ७ प्र यद्वः षट्त्रिंशत्पुनर्वत्सो मारुतं। ८ आ नस्त्र्यधिका सध्वंस आश्विनं ह्यानुष्टुभं तु। ९ आ नूनं सैका शशकर्णोऽत्ये गायत्र्या उपाद्ये चाद्या चतुर्थी षष्ठी चतुर्दश्याद्ये च बृहत्यः पंचमी ककुब्दशम्याद्यास्त्रिष्टुब्विराड् जगत्यः। १० यत्स्थः षट् प्रगाथोऽपश्यद् बृहती मध्येज्योतिरनुष्टुबास्तारपांक्तिः प्रगाथः। ११ त्वमग्ने दश वत्स आग्नेये गायत्र्येंऽत्या दैवी त्रिष्टुबाद्या प्रतिष्ठोपाद्या वर्धमाना ॥ [ ४० ] ( मन्त्राः १८३ )

[ इति पञ्चमोऽष्टकः। मन्त्राः १२६३ ]

१२ य इंद्र त्रयस्त्रिंशत्पर्वत औष्णिहं तु। १३ इंद्रः सुतेषु नारदः। १४ यदिंद्र पंचोना गोषूक्त्यश्वसूक्तिनौ काण्वायनौ। १५ तम्वभि सप्तोनौष्णिहं। १६ प्र सम्राजं द्वादशेरिंबिठिः। १७ आ याहि पंचोना प्रगाथांतं। १८ इदं ह द्व्यधिकादित्यमौष्णिहमष्टम्यश्विभ्यां पराग्निसूर्यानिलानां देवेभिरित्यदितेरदितिर्न इति च द्वे द्वे। १९ तं गूर्धय सप्तत्रिंशत्सोभरिराग्नेयं काकुभं प्रागाथं ह पितुर्न द्विपदांत्ये ककुप्पंक्ती त्रसदस्योर्दानस्तुतिस्तत्पूर्वे उष्णिक्सतोबृहत्यावादित्येभ्यः। २० आ गंता षड्विंशतिर्मारुतं ॥ [ ४१ ] ( मन्त्राः २०६ )

२१ वयमु द्व्यूनांत्ये द्वृचे चित्रस्य दानस्तुतिः। २२ ओ त्यमाश्विनं त्रिप्रगाथादि बृहत्यनुष्टुबेकादश्याद्ये ककुम्मध्येज्योतिषी। २३ ईळिष्व त्रिंशद्विश्वमना वैयश्व आग्नेयमौष्णिहं ह। २४ सखायस्तृचोंऽत्यः सौषाम्णस्य वरोर्दानस्तुतिरंत्यानुष्टुप्। २५ ता वां चतुर्विंशतिर्मैत्रावरुणं दशम्याद्यास्तिस्रो वैश्वदेव्य उपांत्योष्णिग्गर्भा। २६ युवोः पंचाधिका व्यश्वो वांगिरस आश्विनं विंश्याद्या वायव्यास्तत्पूर्वाश्चतस्रो गायत्र्योंऽत्यैकविंश्यौ च विंश्यनुष्टुप्। २७ अग्निरुक्थे द्व्यधिका मनुर्वैवस्वतो वैश्वदेवं ह प्रागाथं। २८ ये त्रिंशति पंचोपांत्या पुरउष्णिक्। २९ बभ्रुर्दश कश्यपो वा मारीचो द्वैपदं। ३० नहि वश्चतुष्कं पुरउष्णिग्बृहत्यनुष्टुबंतं। ३१ यो यजाति द्व्यूनात्रेज्यास्तवो यजमानप्रशंसा च येत्यादि पंच दंपत्योः शिष्टास्तदाशिषोऽनुष्टुप् चतुष्पंक्त्यंतं नवम्यनुष्टुब्दशमी पादनिचृत् ॥ [ ४२ ] ( मन्त्राः २०४ )

३२ प्र कृतानि त्रिंशन्मेधातिथिः। ३३ वयं वैकोना मेध्यातिथिर्बार्हतं त्रिगायत्र्यनुष्टुबंतं। ३४ एंद्र याहि द्व्यूना नीपातिथिरानुष्टुभं तृचोंऽत्यो गायत्रस्तं सहस्रं वसुरोचिषोंऽगिरसोऽपश्यन्। ३५ अग्निना चतुर्विंशतिः श्यावाश्व आश्विनमुपरिष्टाज्ज्योतिषं पंक्तिमहाबृहतीपंक्त्यंतं। ३६ अविता सप्त शाक्वरं महापंक्त्यंतं। ३७ प्रेदं महापांक्तमाद्यातिजगती। ३८ यज्ञस्य दशैंद्राग्नं। ३९ अग्निमस्तोषि नाभाक आग्नेयं महापांक्तं हि। ४० इंद्राग्नी द्वादशैंद्राग्नं त्रिष्टुबंतं द्वितीया शक्वरी। ४१ अस्मा ऊ षु दश वारुणं तु। ४२ अस्तभ्नात्पळर्चनानाना वा त्रैष्टुभमंत्यं वा तृचमाश्विनमानुष्टुभमपश्यत्। ४३ इमे त्रयस्त्रिंशद्विरूप आंगिरस आग्नेयं तु। ४४ समिधाग्निं त्रिंशत्। ४५ आ घ द्विचत्वारिंशत्त्रिशोक आद्याग्नेंद्री ॥ [ ४३ ] ( मन्त्राः २५८ )

---

( ५ ) ब्रह्मातिथिराश्विनं द्विबृहत्यनुष्टुबंतं। ( ६ ) अन्त्यस्तिरिंदिरस्य पारशव्यस्य। ( १८ ) द्व्यधिकादित्यमौष्णिहं चतुर्थ्याद्याश्चतस्रोऽदितेः अष्टम्याश्विभ्यां; द्व्यधिकादित्यमौष्णिहं चतुर्थीपंचमीषष्ठीसप्तमीष्वदितिः अष्टम्यश्विभ्यां। ( १९ ) सप्तत्रिंशत्सौभरिराग्नेयं; सप्तत्रिंशत्सौभरमाग्नेयं।; काकुभप्रागाथं; काकुभः प्रागाथः। ( २२ ) ०त्यमश्विनौ। ( २५ ) वैश्वदेव्यो वोपांत्योष्णिग्गर्भा; ०वैश्वदेव। ( ३५ ) आश्विनमुपरिष्टाज्ज्योतिषं। ( ३७-३९ ) माहापांक्तं।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



४६ त्वावतस्त्रयस्त्रिंशद्वशोऽश्व्य आ स आदि कानीतस्य पृथुश्रवसो दानस्तुतिराद्या पादनिचृत् पंचम्यादि ककुब्गायत्री बृहत्यनुष्टुप् सतोबृहती गायत्री विपरीतोत्तरः प्रगाथो द्विपदा चतुर्विंशिका बृहती पिपीलिकमध्या ककुम्न्यंकुशिरा विराड्जगत्युपरिष्टाद्बृहतीबृहत्यौ विषमपदोत्तरे पंक्ती गायत्री पंक्तिः प्रगाथौ च वायव्यौ गायत्री द्विपदोष्णिक् पंक्तिर्वायव्या गायत्री। ४७ महि वो द्व्यूना त्रित आप्त्य आदित्येभ्योऽस्याः दुःस्वप्नघ्नः पंचोषसेऽपि महापांक्तं। ४८ स्वादोः पंचोना प्रगाथः सौम्यं त्रैष्टुभं पंचमी जगती। ४९ अभि प्र दश प्रस्कण्वः प्रागाथं तत्। ५० प्र सुश्रुतं पुष्टिगुः। ५१ यथा मनौ श्रुष्टिगुः। ५२ यथा मनावायुः। ५३ उपमं त्वाष्टौ मेध्यः। ५४ एतत्ते मातरिश्वा नो विश्व इति वैश्वदेवः प्रगाथः। ५५ भूरीत्पंच कृशः प्रस्कण्वस्य दानस्तुतिर्गायत्रं तृतीयापंचम्यावनुष्टुभौ। ५६ प्रति ते पृषध्रोऽस्याग्निसौरी पंक्तिः। ५७ युवं देवा चतुष्कं मेध्य आश्विनं त्रैष्टुभं। ५८ यमृत्विजस्तृचं वैश्वदेवमाद्य ऋत्विक्स्तुतिर्वा। ५९ इमानि वां सप्त सुपर्ण ऐंद्रावरुणं जागतं। ६० अग्न आ विंशतिर्भर्गः प्रागाथ आग्नेयं प्रागाथं तु। ६१ उभयं द्व्यूना। ६२ प्रो अस्मै द्वादश प्रगाथः पांक्तं सप्तम्याद्यास्तिस्रो बृहत्यः। ६३ स पूर्व्यो गायत्रमाद्या चतुर्थ्यादिद्वे सप्तमी चानुष्टुभोंत्या दैवी गायत्रेंऽस्या दैवी त्रिष्टुप्। ६४ उत्त्वा। ६५ यदिंद्र। ६६ तरोभिः पंचोना कलिः प्रागाथः प्रागाथमंत्यानुष्टुप्। ६७ त्यान्नु सैका मत्स्यः सांमदो मैत्रावरुणिर्मान्यो वा बहवो वा मत्स्या जालनद्धा आदित्यानस्तुवन् दशम्याद्यास्तिस्रोऽप्यदितेः ॥ [ ४४ ] ( मन्त्राः २६८ )

६८ आ त्वैकोना प्रियमेध आदावनुष्टुम्मुखास्तृचाश्चत्वारोंऽस्याः षळृक्षाश्वमेधयोर्दानस्तुतिः। ६९ प्रप्र द्व्यूनानुष्टुभं द्विबृहत्यंतं द्वितीयोष्णिक् चतुर्थ्याद्यास्तिस्रो गायत्र्यः षोळश्येकादश्यौ पंक्ती अपाद्वैश्वदेवोऽर्धर्चस्त्रयो वारुणाः। ७० यो राजा पंचोना पुरुहन्मा बार्हतं त्रिप्रगाथाद्युष्णिगनुष्टुप्पुरउष्णिगंतं। ७१ त्वं नः सुदीतिपुरुमीळ्हौ तयोर्वान्यतर आग्नेयं तु त्रिप्रगाथांतं। ७२ हविद्व्यूना हर्यतः प्रागाथो हविषां स्तुतिर्वा। ७३ उदीराथां गोपवन आत्रेयः सप्तवध्रिर्वाश्विनं। ७४ विशो विशो वः पंचोनाग्नेयं त्वनुष्टुम्मुखास्तृचाश्चत्वारोंऽस्यास्तिस्रोऽनुष्टुभ आर्क्षस्य श्रुतर्वणो दानस्तुतिः। ७५ युक्ष्वा हि षोळश विरूपः। ७६ इमं नु द्वादश कुरुसुतिः काण्वः। ७७ जज्ञान एकादश प्रगाथांतं। ७८ पुरोळाशं दश बृहत्यंतं। ७९ अयं कृत्नुर्नव कृत्नुर्भार्गवः सौम्यमंत्यानुष्टुप्। ८० न ह्यन्यं दशैकद्यूर्नौधसो गायत्रेंऽस्या दैवी त्रिष्टुप्। ८१ आ तू नो नव कुसीदी काण्वः ॥ [ ४५ ] ( मन्त्राः १९५ )

८२ आ प्र। ८३ देवानां वैश्वदेवं। ८४ प्रेष्ठमुशना काव्य आग्नेयं। ८५ आ मे कृष्ण आश्विनं हि। ८६ उभा हि पंच विश्वको वा कार्ष्णिर्जागतं। ८७ द्युम्नी षड्वासिष्ठो वा द्युम्नीकः प्रियमेधो वा प्रागाथं ह। ८८ तं बो दस्मं नोधाः। ८९ बृहदिंद्राय सप्त नृमेधपुरुमेधौ द्व्यनुष्टुब्बृहत्यंतं। ९० आ नो विश्वासु षट्। ९१ कन्या वाः सप्तात्रेय्यपालेतिहास ऐंद्र आनुष्टुभं द्विपंक्त्यादि। ९२ पांतं त्रयस्त्रिंशत् श्रुतकक्षः सुकक्षो वाद्यानुष्टुप्। ९३ उद्घ चतुस्त्रिंशत्सुकक्षोंऽस्यैंद्राभैवी। ९४ गौर्धयति द्वादश बिंदुः पूतदक्षो वा मारुतं। ९५ आ त्वा नव तिरश्चीरांगिरस आनुष्टुभं। ९६ अस्मै सैका द्युतानो वा मारुतिस्त्रैष्टुभं चतुर्थी विराळिष्यामीति मारुतः पादः परैंद्राबार्हस्पत्या। ९७ या इंद्र पंचोना रेभः काश्यपो बार्हतमतिजगत्युपरिष्टाद्बृहत्यावतिजगती त्रिष्टुब्जगतीत्यंततः ॥ [ ४६ ] ( मन्त्राः १९७ )

९८ इंद्राय द्वादश नृमेध औष्णिहं सप्तम्युपांत्ये च ककुभोंऽस्यानवम्यौ पुरउष्णिहौ। ९९ त्वामिदाष्टौ प्रागाथं। १०० अयं ते द्वादश नेमो भार्गवस्त्रैष्टुभं षष्ठी जगती परास्तिस्रोऽनुष्टुभोऽयमिति द्वृचेनेंद्र आत्मानमस्तौदुपांत्ये वाच्यौ।

---

( ४६ ) एकविंशी पंक्तिः। द्वाविंशी संस्तारपक्तिः माहापांक्तं। विषमपदोत्तरा पंक्तिः संस्तारपंक्ति; विषमपदोतरा पांक्तिः संस्तारपंक्तिः। प्रगाथौ वायव्यौ। वायव्यौ बृहत्यौ च। ( ५६ ) अंत्या सौरी। ( ६३ ) स पूर्व्य आद्या चतुर्थ्यादिद्वे सप्तमी चानुष्टुभो गायत्रेंऽस्या दैवी त्रिष्टुप्। स पूर्व्यो गायत्रमाद्या चतुर्थ्यादिद्वे सप्तमी चानुष्टुभो गायत्रेंऽस्या दैवी त्रिष्टुप्। (६७) आदित्यानस्तुवन् दशम्याद्यास्तिस्रोऽप्यदितेः। (७१) त्वं न सुदीतिः पुरुमीळ्हयो राज्ञोर्गृहपतियविष्ठयोर्वान्यतर आयं तु त्रिप्रगाथातं। ( ७४ ) आर्क्ष्यस्य। ( ९४ ) द्वादश बिंदुः। ( ९५ ) तिरश्चीरानुष्टुभं। ( ९६ ) मारुतस्त्रैष्टुभं। ( १०० ) आत्मानमस्तौदष्टमी सौपर्णी (सौवर्णी) नवमी नज्ञसंस्तुतिरुपांत्ये वाच्यौ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

१०१ ऋधक् षोळश जमदग्निर्भार्गवो मैत्रावरुणं प्रागाथं त्रित्रिष्टुबंतं तृतीयादि गायत्री परा सतोबृहती स्तोत्रं राजस्वृक्सपादादि- त्याश्विन्यौ वायव्ये सौर्यौ बृहत्युपस्या सूर्यप्रभास्तुतिर्वा पावमानी गव्ये । १०२ त्वमग्ने द्व्यधिका भार्गवः प्रयोगो बार्ह- स्पत्यो वाग्निः पावकः सहसः सुतयोर्वाग्न्योर्गृहपतियविष्ठयोर्वान्यतर आग्नेयं तु । १०३ अदर्शि षळूना सोभरिर्बार्हतं पंचमी विराड्रूपा सप्तम्याद्ययुजः सतोबृहत्योऽष्टम्यादि युजः ककुब्भ्रसीयसी ककुबनुष्टुबंत्याग्निमारुती ।

॥ इत्यष्टमं मंडलं समाप्तं ॥ [ अष्टममण्डलस्य मन्त्राः १७१६ ]

नवमं मंडलं पावमानं सौम्यं । १ स्वादिष्ठया दश मधुच्छंदाः । २ पवस्व मेधातिथिः । ३ एष शुनःशेपः । ४ सन हिरण्यस्तूपः । ५ समिद्ध एकादश काश्यपोऽसितो देवलो वा विंशतिः सूक्तान्याद्यमाप्रियश्चतुरनुष्टुबंतं । ६ मंद्रया नव । ७ असृग्रं । ८ एते सोमाः । ९ परि प्रिया । १० प्र स्वानासः । ११ उपास्मै । १२ सोमा असृग्रं ॥ [४७] ( मन्त्राः १९८ )

१३ सोमः । १४ परि प्रास्टौ । १५ एष धिया । १६ प्र ते । १७ प्र निम्नेनेव । १८ परि सुवानः सप्त। १९ यत्सोम । २० प्र कविः । २१ एते धावंति । २२ एते सोमासः । २३ सोमा असृग्रं । २४ प्र सोमासः । २५ पवस्व षड् दृळ्हच्युत आगस्त्यः । २६ तममृक्षंतेध्मवाहो दार्ढच्युतः । २७ एष कविर्नृमेधः । २८ एष वाजी प्रियमेधः । २९ प्रास्य नृमेधः । ३० प्र धारा बिंदुः । ३१ प्र सोमासो गोतमः । ३२ प्र सोमासः श्यावाश्वः । ३३ प्र सोमासस्त्रितः । ३४ प्र सुवानः । ३५ आ नः पवस्व प्रभूवसुः । ३६ असर्जि । ३७ स सुतो रहूगणः । ३८ एष उ स्यः । ३९ आशुरर्ष बृहन्मतिः । ४० पुनानः । ४१ प्र ये गावो मेध्यातिथिः । ४२ जनयन् । ४३ यो अत्य इव ॥ [ ४८ ] ( मन्त्राः २०४ ) [ इति षष्ठोऽष्टकः । मन्त्राः १७३० ]

४४ प्र णोऽयास्यः । ४५ स पवस्व । ४६ असृग्रन् । ४७ अया सोमः पंच कविर्भार्गवः । ४८ तं त्वा । ४९ पवस्व । ५० उत्ते शुष्मास उचथ्यः । ५१ अध्वर्यो । ५२ परि द्युक्षः । ५३ उत्ते चतुष्कमवत्सारः । ५४ अस्य प्रत्नां । ५५ यवंयवं । ५६ परि सोमः । ५७ प्र ते धाराः । ५८ तरत्सः । ५९ पवस्व । ६० प्र गायत्रेणोपांत्या पुरउष्णिक् । ६१ अया वीती त्रिंशदमहीयुः । ६२ एते असृग्रं जमदग्निः । ६३ आ पवस्व निध्रुविः काश्यपः । ६४ वृषा सोम कश्यपः ॥ [ ४९ ] ( मन्त्राः २०० )

६५ हिन्वंति भृगुर्वारुणिर्जमदग्निर्वा । ६६ पवस्व शतं वैखानसा अष्टादश्यनुष्टुप्परास्तिस्र आग्नेय्यः । ६७ त्वं सोमासि द्वात्रिंशद्भरद्वाजः कश्यपो गोतमोऽत्रिर्विश्वामित्रो जमदग्निर्वसिष्ठ इतीह तृचाः सप्त ऋषयः शेषे पवित्रो वसिष्ठो वोभौ वा पवस्व सोम तिस्रो निरवद्विपदा गायत्र्योऽविता नास्तिस्रः पौष्ण्यो वा यत्ते पवित्रं पंचाग्नेय्यः साविष्यग्निसावित्री वैश्वदेवी वासामंत्यास्त्रिंशी पुरउष्णिक् सप्तविंश्यनुष्टुबंत्ये च ते पावमान्यध्येतृस्तुती । जागतमूर्ध्वं प्रागुशनसः । ६८ प्र देवं दश वत्सप्रिर्भालंदनस्त्रिष्टुबंतं ह । ६९ इषुर्न हिरण्यस्तूपोंऽत्ये त्रिष्टुभौ । ७० त्रिरस्मै रेणुः । ७१ आ दक्षिणा नव ऋषभः । तौ वैश्वामित्रौ । ७२ हरिं हरिमंतः । ७३ स्रक्वे पवित्रः । ७४ शिशुर्न कक्षीवांस्त्रिष्टुबष्टमी । ७५ अभि प्रियाणि पंच कविः ॥ [ ५० ] ( मन्त्राः १६३ )

७६ धर्ता । ७७ एषः । ७८ प्र राजा । ७९ अचोदसः । ८० सोमस्य वसुर्भारद्वाजः । ८१ प्र सोमस्य । ८२ असावीति त्रिष्टुबंते । ८३ पवित्रं ते पवित्रः । ८४ पवस्व वाच्यः प्रजापतिः । ८५ इन्द्राय द्वादश वेनो भार्गवो द्वित्रिष्टुबंतं । ८६ प्र तेऽष्टाचत्वारिंशदृषिगणा दशर्चा अकृष्टा माषाः प्रथमे सिकता निवावरी द्वितीये पृश्नयोऽजास्तृतीयेऽ-

---

( १०२ ) गृहपतियविष्ठयः । ( १०३ ) पंचम्याद्ययुजः । ककुबृहसीयसी; ककुब् गायत्री ।

( ५८ ) तरत्सः । ( ६८ ) वत्सप्रिर्भालंदनस्त्रिष्टुबंतं । ( ६९ ) हिरण्यस्तूपोंऽते । ( ८६ ) अजास्तृतीये त्रयः । पंचांत्या तिस्रः ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

प्रथश्चतुर्थेऽग्निः पंचांत्या गृत्समदः। ८७ प्र तु नवोशना। ८८ अयं सोमोऽष्टौ। ८९ प्रो स्य सप्त। ९० प्र हिन्वानः षड्वसिष्ठः ॥ [ ५१ ] ( मन्त्राः १३५ )

९१ असर्जि कश्यपः। ९२ परि सुवानः। ९३ साकमुक्षः पंच नोधाः। ९४ अधि यत्कण्वः। ९५ कनिक्रंति प्रस्कण्वः। ९६ प्र सेनानीश्चतुर्विंशतिर्दैवोदासिः प्रतर्दनः। ९७ अस्य प्रेषाष्टापंचाशदाद्यं तृचं वसिष्ठोऽपश्यदुत्तरान्नव पृथग्वासिष्ठा इंद्रप्रमतिर्वृषगणो मन्युरुपमन्युर्व्याघ्रपाच्छक्तिः कर्णश्रुन्मृळीको वसुक्र इति चतुर्दश पराशरोंऽत्याः कुत्सः। ९८ अभि नो द्वादशांबरीष ऋजिश्वा चानुष्टुभं ह बृहत्युपांत्या। ९९ आ हर्यतायाष्टौ रेभसूनू काश्यपौ बृहत्याद्या। १०० अभी नवंते नव ॥ [ ५२ ] ( मन्त्राः १३८ )

१०१ पुरोजिती षोळशांधीगुः श्यावाश्विर्ययातिर्नाहुषो नहुषो मानवो मनुः सांवरण इति तृचाः शेषे प्रजापतिरुपाद्ये गायत्र्यौ। १०२ क्राणाष्टौ त्रित औष्णिहं वै। १०३ प्र पुनानाय षड् द्वित आप्त्यः। १०४ सखायः पर्वतनारदौ काश्यपौ द्वे शिखंडिन्यौ वाप्सरसौ। १०५ तं वः। १०६ इन्द्रमच्छ षळूनाग्निश्चाक्षुषश्चक्षुर्मानवो मनुराप्सव इति तृचाः पंचाग्निः। १०७ परीतः षड्विंशतिः सप्त ऋषयः प्रागाथं तृतीयाषोळश्यौ द्विपदे अष्टम्याद्ये बृहत्यौ। १०८ पवस्व षोळश गौरिवीतिर्द्वृचं शक्तिरेकामूरुर्ऋजिश्वोर्ध्वसद्मा कृतयशा ऋणंचय इत्यृषयो द्वृचास्तिस्रः शक्तिः काकुभाः प्रगाथाः स सुन्वे गायत्री यवमध्या। १०९ परि प्र ध्यधिकान्नयो धिष्ण्या ऐश्वरयो द्वैपदं। ११० पर्यू षु द्वादश त्र्यरुणत्रसदस्यू राजानौ तिस्रोऽनुष्टुभः पिपीलिकमध्याः षळूर्ध्वबृहत्यस्तिस्रश्च विराजः। १११ अया रुचा तृचमनानतः पारुच्छेपिरात्यष्टं। ११२ नानानं चतुष्कं शिशुः पांक्तं हि। ११३ शर्यणावत्येकादश कश्यपः। ११४ य इंद्रोश्चतुष्कं ॥

॥ इति नवमं मंडलं समाप्तं ॥ ( नवममण्डलस्य मन्त्राः ११०८ )

१ अग्ने सप्त त्रितः। २ पिप्रीहि। ३ इनः। ४ प्र ते। ५ एकः ॥ [ ५३ ] ( मन्त्राः १८९ )

६ अयं। ७ स्वस्ति। ८ प्र केतुना नव त्रिशिरास्त्वाष्ट्रस्तृचोंऽत्य ऐंद्रः। ९ आपो हि सिंधुद्वीपो वांबरीष आपं गायत्रं द्व्यनुष्टुबंतं पंचमी वर्धमाना सप्तमी प्रतिष्ठा। १० ओ चित्सखूना वैवस्वतयोर्यमयम्योः संवादः षष्ठ्ययुग्भिर्यमी मिथुनार्थं यमं प्रोवाच स तां नवमीयुग्भिरनिच्छन् प्रत्याचष्टे। ११ वृषा नवांगिर्हविर्धान आग्नेयं तु त्रित्रिष्टुबंतं। १२ द्यावा। १३ युजे पंच विवस्वान्वादित्यो हाविर्धानं जगत्यंतं। १४ परेयिवांसं षोळश यमो याम्यं षष्ठी लिंगोक्तदेवता पराश्च तिस्रः पित्र्या वा तिस्रः श्वभ्यां परः अनुष्टुभो बृहत्युपांत्या। यामायनाः परे पंच। १५ उदीरतां षळूना शंखः पित्र्यं जगत्येकादशी। १६ मैनं दमन आग्नेयं चतुरनुष्टुबंतं। १७ त्वष्टा देवश्रवा द्वे सरण्यूदेवते पौष्ण्यश्चतस्रः सारस्वत्यास्तिस्रः पंचाप्यो द्रप्सस्तिस्रः सौम्यो वांत्ये अनुष्टुभा उपांत्या पुरस्ताद्बृहती वा। १८ परं मृत्यो संकुसुकश्चतस्रो मृत्युदेवताः परा धात्री परा त्वाष्ट्री पराः पितृमेधा एकादशी प्रस्तारपंक्तिर्जगत्युपांत्यांत्यानुष्टुप् प्राजापत्या वा सानिरुक्ता ॥ [५४] ( मन्त्राः १४१ )

१९ नि वर्तध्वमष्टौ मथितो भृगुर्वारुणिर्भार्गवश्च्यवनो वापं गव्यं वानुष्टुभमग्नीषोमीयो द्वितीयोऽर्धर्चः षष्ठी गायत्री। सप्तोत्तराण्यैंद्रो विमदः प्राजापत्यो वा वासुक्रो वसुकृद्वा। २० भद्रं दशाग्नेयं तु गायत्रमाद्यैकपदा पाद एव वा शांत्यर्थः परानुष्टुबंत्ये विराट् त्रिष्टुभौ। २१ आग्निं नाष्टावास्तारपांक्तं। २२ कुह पंचोना पुरस्ताद्बार्हतं त्रिष्टुबंतं त्वं त्या चिदा नस्त्वं नोऽनुष्टुभः। २३ यजामहे सप्तांत्ये त्रिष्टुभौ पंचम्यभिसारिणी। २४ इंद्र सोमं षळास्तारपांक्तं स्वाश्विन्योंऽत्यास्तिस्रोऽनुष्टुभः। २५ भद्रमेकादश सौम्यं। २६ प्र हि नव पौष्णमानुष्टुभमाद्याचतुर्थ्यौ उष्णिहौ। २७ असत्सु

---

( १०१ ) श्यावाश्विरंधीगुः। ( १०८ )० यवमध्या परा सतोबृहती। ( १०९ ) ऐश्वरा द्वैपदं।

( ११ ) तु त्रित्रिष्टुबंतं। ( १३ ) विवस्वानादित्यो। हावर्धानं, हविर्धानं। ( १७ ) वांते। ( १९ ) वानुष्टुभमग्निषोमीयो वा। द्वितीयोऽर्धर्चः आनुष्टभं षष्ठी।; षष्ठी गायत्र्यैंद्री च। प्राजापत्यो वासुक्रपुत्रो वा। ( २६ ) आद्या चतुर्थी च।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

 Vinay Avasthi Sahib Bhuvan Vani Trust Donations 

चतुर्विंशतिरैंद्रो वसुक्रः । २८ विश्वो हि द्वादशैंद्रवसुक्रयोः संवाद ऐंद्रः सूक्तस्य प्रथमयेंद्रस्य स्नुषा परोक्षवदिंद्रमाहैंद्रस्य युजः शिष्टा ऋषेश्चतुर्थी च । २९ वने नाष्टौ । ३० प्र देवत्रा पंचोना कवष ऐलूष आपमपोनप्त्रीयं वा । ३१ आ म एकादश वैश्वदेवं । ३२ प्र सु ग्मंता नव पंचाद्या जगत्यः ॥ [ ५५ ] ( मन्त्राः १५३ )

३३ प्र माद्या वैश्वदेव्यैंद्रः प्रगाथः परा गायत्र्यो द्वे कुरुश्रवणस्य त्रासदस्यवस्य दानस्तुतिः पराभिर्मृते मित्रातिथौ राज्ञि तत्स्नेहादृषिरुपमश्रवसं पुत्रमस्य व्यशोकयत् । ३४ प्रावेपाः षळूना मौजवान्वाक्षोऽक्षकृषिप्रशंसा चाक्षकितवनिंदा च सप्तमी जगती । ३५ अबुध्रं लुशो धानाको वैश्वदेवं तु द्विस्त्रिष्टुबंतं तु । ३६ उषासानक्ता । ३७ नमो द्वादश सौर्योऽभितपाः सौर्यं जागतं वै त्रिष्टुब्दशमी । ३८ अस्मिन्नः पंच मुष्कवानिंद्रः । ३९ यो वां षळूना काक्षीवती घोषाश्विनं हि त्रिष्टुबंतं । ४० रथं यांतं । ४१ समानं तृचं सुहस्त्यो घौषेयः । ४२ अस्तेवैकादश कृष्णः । ४३ अच्छा मे द्विस्त्रिष्टुबंतं तु । ४४ आ यातु त्रिस्त्रिष्टुबादि । ४५ दिवस्परि द्वादश वत्सप्रीराग्नेयं तु ॥ [ ५६ ] ( मन्त्राः १४४ ) [ इति सप्तमोऽष्टकः । मन्त्राः १२६३ ]

४६ प्र होता दश । ४७ जगृभ्माष्टौ सप्तगुर्वैकुंठमिंद्रं तुष्टाव । विकुंठा नामासुरींद्रतुल्यं पुत्रमिच्छंती महत्तपस्तेपे तस्याः स्वयमेवेंद्रः पुत्रो जज्ञे । स सप्तगुस्तुतिसंहृष्ट आत्मानमुत्तरैस्त्रिभिस्तुष्टाव । ४८ अहं भुवमेकादशांत्ये त्रिष्टुभौ सप्तमी च । ४९ अहं दामंत्योपाद्ये च त्रिष्टुभौ । ५० प्र वो महे सप्त द्विजगत्याद्यंतं के तेऽभिसारिण्यौ । वषट्कारेण वृक्णेषु भ्रातृषु सौचीकोऽग्निरपः प्रविश्य देवैः समवददुत्तरैस्त्रिभिः । ५१ महत्तन्नवात्र युजोऽग्निवाक्यं । ५२ विश्व इत्युत्तरं च षट्कमयुजो देवानां । ५३ यमैच्छामेत्युत्तरं चैकादशकं तदद्येति तु द्वृचोऽग्नेस्तंतुमाद्या जगत्योऽष्टमीवर्जं । ५४ तां सु षड् बृहदुक्थो वामदेव्यः । ५५ दूरेऽष्टौ । ५६ इदं ते सप्त वैश्वदेवं तु चतुर्थ्याद्यास्तिस्रो जगत्यः । पराणि चत्वारि सूक्तान्युक्ता ऋषयो द्वैपदे स्वत्रिमंडले । अथ हैक्ष्वाको राजासमातिर्गौपायनान्बंधवादीन्पुरोहितांस्त्यक्त्वान्यौ मायाविनौ श्रेष्ठतमौ मत्वा पुरोदधे । तमितरे क्रुद्धा अभिचेरुः । अथ तौ मायाविनौ सुबंधोः प्राणानाचिक्षिपतुरथ ह्यस्य भ्रातरस्त्रयः । ५७ मा प्र गामेति षट्कं गायत्रं स्वस्त्ययनं जप्त्वा । ५८ यत्ते यममिति द्वादशर्चमानुष्टुभं मनआवर्तनं जेपुः । ५९ प्र तारीति दशर्चे चतस्रो निर्ऋत्यपनोदार्थं जेपुश्चतुर्थ्यां सोमं चास्तुवन्मृत्योरपगमायोत्तराभ्यां देवीमसुनीतिं सप्तम्यां लिंगोक्तदेवताः शिष्टाभिः पंक्तिमहापंक्तिपंक्त्युत्तराभिर्द्यावापृथिव्यौ समिंद्रेर्तीद्वं चार्धर्चेन । ६० आ जनमिति द्वादशर्चं आनुष्टुभे चतसृभिरसमातिमस्तुवन् पंचम्येंद्रं षष्ठ्यागस्त्यस्य स्वसा मातैषां राजानमस्तौत्पराभिः सुबंधोर्जीवमाह्वयंस्तमंत्यया लब्धसंज्ञमस्पृशन् पंचाद्या गायत्र्योऽष्टम्याद्ये पंक्ती । ६१ इदमित्था सप्ताधिका नाभानेदिष्ठो मानवो वैश्वदेवं तत् ॥ [५७] ( मन्त्राः १६१ )

६२ ये यज्ञेनैकादशाद्याः षळंगिरसां स्तुतिर्वांत्या त्रिष्टुप्पंचम्यनुष्टुप्प्रगाथोऽनुष्टुभौ गायत्री चतस्रोऽत्याः सावर्णेर्दानस्तुतिः । ६३ परावतस्त्यूना गयः प्लातो द्विस्त्रिष्टुबंतं तु स्वति नस्त्रिष्टुब्वा सा सहोत्तरया पथ्यास्वस्तिदेवत्या । ६४ कथा यां से त्रिष्टुप् । ६५ अग्निरिंद्रः पंचोना वसुकर्णो वासुक्रस्त्रिष्टुबंतं तु । ६६ देवान्हुवे । ६७ इमां धियं द्वादशायास्यो बार्हस्पत्यं तु । ६८ उदप्रुतः । ६९ भद्राः सुमित्रो वाध्र्यश्च आग्नेयं द्विजगत्यादि । ७० इमां म एकादशाप्रं । ७१ बृहस्पते बृहस्पतिर्ज्ञानं तुष्टाव नवमी जगती ॥ [ ५८ ] ( मन्त्राः १३३ )

७२ देवानां नव लौक्यो वा बृहस्पतिर्दाक्षायण्यदितिर्वा दैवमानुष्टुभं । ७३ जनिष्ठा एकादश गौरिवीतिः । ७४ वसूनां षट् । ७५ प्र सु नव सिंधुक्षित्प्रैयमेधो नदीस्तुतिर्जागतं तु । ७६ आ वोऽष्टौ सर्प ऐरावतो जरत्कर्णो ग्राव्णोऽस्तौत् । ७७ अभ्रप्रुषः स्यूमरश्मिर्भार्गवो मारुतं तु पंचमी जगती । ७८ विप्रासो द्वितीया पंचम्याद्याश्च तिस्रो जगत्यः ।

---

( २८ ) युजः शेषाः । ( ४१ ) सुहस्तो । ( ४५ ) वत्सप्रिः । ( ४७ ) पुत्रमिच्छन्ति तपस्तेपे तस्याः । ( ४९ ) दामंत्योपाद्ये च; दामंत्योपाद्ये च त्रिष्टुभौ । ( ५१ ) महत्तन्नव तत्र । ( ५४ ) वामदेव्यः वा । ( ५६ ) प्राणानाचिक्षिपतुरथ अस्य भ्रातरः । ( ५९ ) चार्धर्चेन । ( ६० ) द्वादशर्चमानुष्टुभं । ( ६३ ) सा सहोत्तरया; चोत्तरया, सहोत्तरया । ( ७१ ) ज्ञानं तु शिष्टा ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

७९ अपश्यं सप्त सौचीकोऽग्निर्वैश्वानरो वा सप्तिर्वा वाजंभर आग्नेयं तु। ८० अग्निः सप्तिं। ८१ य इमा विश्वकर्मा भौवनो वैश्वकर्माणं तु द्वितीया विराड्रूपा। ८२ चक्षुषः। ८३ यस्ते मन्यो मन्युस्तापसो मान्यवं त्वाद्या जगती। ८४ त्वया मन्यो चतुर्जगत्यंतं। ८५ सत्येन सप्तचत्वारिंशत्सावित्री सूर्यात्मदैवतमानुष्टुभं पंचभिः सोममस्तौत्पराभिः स्वविवाहं सप्तदश्या देवान्परया सोमार्कौ परया चंद्रमसं परा नृणां विवाहमंत्रा आशीःप्रायाः परा देहीति द्वे वधूवासःसंस्पर्शमोचन्यौ परा यक्ष्मनाशिनी दंपत्योर्नवोनवास्तित्रोऽनृक्षरा गृभ्णामीति द्वे द्वे यदश्विना पूषाघोरचक्षुरिति त्रिष्टुभस्त्रिष्टमुरोबृहती पूर्वापरमिह प्रियमा नः प्रजां जगत्यः ॥ [५९] ( मन्त्राः १४८ )

८६ वि हि स्यधिकैंद्रो वृषाकपिरिंद्राणींद्रश्च समूदिरे पांक्तं। ८७ रक्षोहणं पंचाधिका पायुराग्नेयं रक्षोघ्नं चतुरनुष्टुबंतं। ८८ हविरेकोनांगिरसो मूर्धन्वान्वामदेव्यो वा सौर्यवैश्वानरीयं। ८९ इंद्रं स्तव द्व्यूना रेणुः पंचम्यैंद्रासोमी। ९० सहस्रशीर्षा षोळश नारायणः पौरुषमानुष्टुभं त्रिष्टुबंतं तु। ९१ सं जागृवद्भिः पंचोनारुणो वैतहव्य आग्नेयं। ९२ यज्ञस्य शार्यातो मानवो वैश्वदेवं तु जागतं। ९३ महि तान्वः पार्थः प्रास्तारपांक्तं पुरस्ताद्बृहत्यंतं त्रयोदश्युपाद्ये चानुष्टुभो नवम्यक्षरैः पंक्तिरेकादशी न्यंकुसारिणी। ९४ प्रैते षळूना सर्पोऽर्बुदः काद्रवेयो ग्राव्णोऽस्तौत्पंचम्यंत्ये त्रिष्टुभौ सप्तमी च ॥ [६०] ( मन्त्राः १६० )

९५ हये द्व्यूनोर्वशीमैळः पुरूरवाः पूर्वोषितां कामात्पुनरासाद्यावरोद्धुमैच्छत्सा तमनिच्छंती प्रत्याचष्टे हय इषुर्या कदा सुदेवोऽतरिक्षप्रां सचेति तिस्रश्चैळवाक्यं शिष्टा उर्वश्याः। ९६ प्र ते सप्तोना बरुः सर्वहरिर्वैंद्रो हरिस्तुतिर्द्विस्त्रिष्टुबंतं। ९७ या ओषधीस्त्र्यधिकाथर्वणो भिषगोषधिस्तुतिरानुष्टुभं। ९८ बृहस्पते द्वादशार्ष्टिषेणो देवापिर्वृष्टिकामो देवांस्तुष्टाव। ९९ कं नो वम्रो वैखानसः। १०० इंद्र दुवस्युर्वांदनो वैश्वदेवं तु त्रिष्टुबंतं। १०१ उद्बुध्यध्वं बुधः सौम्य ऋत्विक्स्तुतिर्वा नवम्यंत्ये जगत्यौ पंचमी बृहती गायत्र्योर्मध्ये। १०२ प्र ते मुद्गलो भार्म्यश्वो द्रुघणेन ऋषभेण चाजिं जिगायेति द्रौघणं वाद्या तृतीयांत्या च बृहत्यः। १०३ आशुः सप्तोनैंद्रोऽप्रतिरथश्चतुर्थी बार्हस्पत्योपांत्याप्वादेव्यंत्यानुष्टुम्मारुती वा। १०४ असाव्येकादशाष्टको वैश्वामित्रः। १०५ कदा कौत्सो दुर्मित्रो नाम्ना सुमित्रो गुणतः सुमित्रो वा नाम्ना दुर्मित्रो गुणत औष्णिहं हरी वज्रं पिपीलिकमध्ये त्रिष्टुबंत्याद्या गायत्री वा ॥ [६१] ( मन्त्राः १४९ )

१०६ उभौ भूतांशः काश्यप आश्विनं। १०७ आविर्दिव्यो दक्षिणा वा प्राजापत्या दक्षिणां तद्दातॄन्वास्तौच्चतुर्थी जगती। १०८ किमिच्छंती पणिभिरसुरैर्निरूळ्हा गा अन्वेष्टुं सरमा देवशुनीमिंद्रेण प्रहितामयुग्भिः पणयो मित्रीयन्तः प्रोचुः सा तान्युग्मांत्याभिरनिच्छंती प्रत्याचष्टे। १०९ तेऽवदंत्सप्त जुहूर्ब्रह्मजाया ब्राह्मो वोर्ध्वनाभा वैश्वदेवं द्व्यनुष्टुबंतं। ११० समिद्ध एकादश जमदग्निस्तत्सुतो वा राम आप्रियः। परे चत्वारो वैरूपाः। १११ मनीषिणो दशाष्टादंष्ट्रः। ११२ इंद्र पिब नभःप्रभेदनः। ११३ तमस्य शतप्रभेदनोऽस्या त्रिष्टुप्। ११४ घर्मा सध्रिस्तापसो वा घर्मो वैश्वदेवं चतुर्थी जगती। ११५ चित्र इच्छव वार्ष्टिहव्य उपस्तुत आग्नेयं जागतं त्रिष्टुप्शक्वर्यंतं। ११६ पिब स्थौरोऽग्नियुतोऽग्नियूपो वा। ११७ न वा उ भिक्षुर्धनान्नदानप्रशंसाद्ये जगत्यौ। ११८ अग्ने हंस्युरुक्षय आमहीयव आग्नेयं राक्षोघ्नं गायत्रं तु। ११९ इति वै सप्तोनैंद्रो लव आत्मानं तुष्टाव ॥ [६२] ( मन्त्राः १४० )

१२० तदिद्नवाथर्वणो बृहद्दिवः। १२१ हिरण्यगर्भो दश हिरण्यगर्भः प्राजापत्यः कायं। १२२ वसुं नाष्टौ चित्रमहा वासिष्ठ आग्नेयं जागतमाद्यां पंचमीं चर्ते। १२३ अयं वेनो वैन्यं। १२४ इमं नो नवैंद्र्युत्तमा निहवोऽग्निवरुणसोमाना-

---

( ८५ ) विवाहमंत्राशीःप्रायाः; विवाहमंत्राआशीः प्रायाः। संस्पर्शनिंदार्थे; संस्पर्शमोचिन्यौ; परा देहीत्यृग्द्वये वधूवासःस्पर्शनिंदा। यक्ष्मनाशिनी परा। ( ८९ ) पंचम्यैंद्रासोमी। ( ९१ ) वीतहव्य। ( ९३ ) पार्थ्यः। चानुष्टुभौ। ( ९५ ) पूर्वोषितात्। ( १०० ) स्वंत्या त्रिष्टुप्। ( १०२ ) द्रुघणेन वृषभेन। तृतीयांत्या बृहत्यः। ( १०७ ) दक्षिणा; दक्षिणाः। ( १०८ ) निगूळ्हाः। प्रेषिता अयुग्भिः। प्रोचुः स। तान्युग्मांताभिः। ( १११ ) दशाष्टादंष्ट्रः। ( ११३ ) त्रिष्टुबंतं। ( ११६ ) स्थौलः; स्थौवः। अग्नियूतो। ( ११७ ) भिक्षुर्धनान्नदानप्रशंसा चाद्ये। ( ११९ ) सप्तोनैंद्रो लव।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

आद्याग्नेयी तिस्रश्चाग्नेरात्मस्तवः शिष्टा यथानिपातं सप्तमी जगती । १२५ अहमष्टौ वागांभृणी आत्मानं तुष्टाव द्वितीया जगती । १२६ न तं शैलूषिः कुल्मलबर्हिषो वामदेव्यो वांहोमुग्वैश्वदेवमुपरिष्टाद्बार्हतमंत्या त्रिष्टुप् । १२७ रात्री कुशिकः सौभरो रात्रिर्वा भारद्वाजी रात्रिस्तवं गायत्रं । १२८ ममाग्ने नव विहव्यो वैश्वदेवं जगत्यंतं । १२९ नासत्सप्त प्रजापतिः परमेष्ठी भाववृत्तं तु । १३० यो यज्ञो यज्ञः प्राजापत्यो जगत्याद्या । १३१ अप प्राचः सुकीर्तिः काक्षीवतो मध्येऽनुष्टुप्सोत्तरा चाश्विन्यौ । १३२ ईजानं शकपूतो नार्मेधो मैत्रावरुणमाद्या लिंगोक्तदेवता न्यंकुसारिण्यंत्या महासतो-बृहत्युपाद्योपांत्ये प्रस्तारपंक्ती शेषा विराड्रूपाः । १३३ प्रो षु सुदाः पैजवनः शाक्वरमहापांक्तावाद्यौ तृचौ त्रिष्टुबंत्या । १३४ उभे यन्मांधाता यौवनाश्वो महापांक्तं पंक्तिरंत्या तामध्यर्धां गोधाऽपश्यत् । १३५ यस्मिन्कुमारो यामायनो याममानुष्टुभं हि । १३६ केशी मुनयो वातरशना जूतिर्वातजूतिर्विप्रजूतिर्वृषाणकः करिक्रत एतश ऋष्यशृंगश्चैकर्चाः केशिनं । १३७ उत देवाः सप्त ऋषय एकर्चा वैश्वदेवं । १३८ तव त्ये षळंग औरवो जागतं । १३९ सूर्यरश्मिर्देवगंधर्वो विश्वावसुरात्मानमस्तौत्पूर्वार्धं सवितारं । १४० अग्ने तवाग्निः पावक आग्नेयं विष्टारपंक्तिस्तिस्रः सतोबृहत्य उपरिष्टाज्ज्योतिः । १४१ अग्ने अच्छाग्निस्तापसो वैश्वदेवमानुष्टुभं हि । १४२ अयमष्टौ द्व्यृचाः शार्ङ्गा जरिता द्रोणः सारिसृक्वः स्तंबमित्रश्चाग्नेयमाद्ये जगत्यौ चतस्रश्च त्रिष्टुभः ॥ [ ६३ ] ( मन्त्राः १७२ )

१४३ त्यं षट् सांख्योऽत्रिराश्विनं । १४४ अयं हि तार्क्ष्यपुत्रः सुपर्णो यामायनो वोर्ध्वकृशनो गायत्री बृहती गायत्र्यौ सतोबृहती विष्टारपंक्तिः । १४५ इमामिंद्राण्युपनिषत्सपत्नीबाधनमानुष्टुभं तु पंक्त्यंतं । १४६ अरण्यान्यैरंमदो देवमुनिररण्यानीं तुष्टाव । १४७ श्रत्ते पंच सुवेदाः शैरीषिस्त्रिष्टुबंतं । १४८ सुष्वाणासः पृथुर्वैन्यः । १४९ सविताऽर्चन्हैरण्यस्तूपः सावित्रं । १५० समिद्धो वासिष्ठो मृळीक आग्नेयं बार्हतमंत्ये उपरिष्टाज्ज्योतिषी जगत्युपांत्या वा । १५१ श्रद्धया श्रद्धा कामायनी श्राद्धमानुष्टुभं तु । १५२ शासः शासो भारद्वाजः । १५३ ईंखयंतीर्देवजामय इंद्रमातरो गायत्रं । १५४ सोमो यमी भाववृत्तमानुष्टुभं तु । १५५ अरायि शिरिंबिठो भारद्वाजोऽलक्ष्मीघ्नं द्वितीयातृतीये ब्राह्मणस्पत्ये अंत्या वैश्वदेवी । १५६ अग्निं केतुराग्नेय आग्नेयं गायत्रं । १५७ इमा नु कं भुवन आप्त्यः साधनो वा भौवनो वैश्वदेवं द्वैपदं त्रैष्टुभं । १५८ सूर्यो नश्चक्षुः सौर्यः सौर्यं गायत्रं । १५९ उदसौ षट् पौलोमी शच्यात्मानं तुष्टावानुष्टुभं । १६० तीव्रस्य पंच पूरणो वैश्वामित्रः । १६१ मुंचामि प्राजापत्यो यक्ष्मनाशनो राजयक्ष्मघ्नमंत्यानुष्टुप् । १६२ ब्रह्मणा षड् ब्राह्मो रक्षोहा गर्भसंस्रावे प्रायश्चित्तमानुष्टुभं हि । १६३ अक्षीभ्यां विवृहा काश्यपो यक्ष्मघ्नं । १६४ अपेहि पंच प्रचेता दुःस्वप्नघ्नं पंक्त्यंतं त्रिष्टुब्मध्यं । १६५ देवा नैर्ऋतः कपोतः कपोतोपहतौ प्रायश्चित्तं वैश्वदेवं । १६६ ऋषभमृषभो वैराजः शाक्वरो वा सपत्नघ्नमानुष्टुभं महापंक्त्यंतं । १६७ तुभ्येदं चतुष्कं विश्वामित्रजमदग्नी जागतं तृतीया लिंगोक्तदेवता । १६८ वातस्यानिलो वातायनो वायव्यं । १६९ मयोभूः शबरः काक्षीवतो गव्यं । १७० विभ्राड्विभ्राट् सौर्यः सौर्यं जागतमास्तारपंक्त्यंतं । १७१ त्वं त्यमिटो भार्गवो गायत्रं । १७२ आ याहि संवर्त उषस्यं द्वैपदं । १७३ आ त्वा षड् ध्रुवो राज्ञः स्तुतिस्त्वानुष्टुभं तु । १७४ अभीवर्तेन पंचाभीवर्तः । १७५ प्र वश्चतुष्कमूर्ध्वग्रावा सर्पोऽऽर्बुदिर्ग्राव्णोऽस्तौद्गायत्रं । १७६ प्र सूनवः सूनुरार्भव आग्नेयमानुष्टुभं द्वितीया गायत्र्याद्यार्भवी । १७७ पतंगं तृचं पतंगः प्राजापत्यो मायाभेदं जगत्यादि । १७८ त्यमू ष्वरिष्टनेमिस्तार्क्ष्यस्तार्क्ष्यं । १७९ उत्तिष्ठतैकर्चाः शिबिरौशीनरः काशिराजः प्रतर्दनो रौहिदश्वो वसुमना आद्यानुष्टुप् । १८० प्र ससाहिषे जय ऐंद्रः । १८१ प्रथश्चैकर्चाः प्रथो वासिष्ठः सप्रथो भारद्वाजो घर्मः सौर्यो वैश्वदेवं । १८२ बृहस्पतिस्तपुर्मूर्धा बार्हस्पत्यो बार्हस्पत्यं । १८३ अपश्यं प्रजावान्प्राजापत्योऽन्वृचं यजमानपत्नी–होत्राशिषः । १८४ विष्णुस्त्वष्टा गर्भकर्ता विष्णुर्वा प्राजापत्यो गर्भार्थाशीर्लिंगोक्तदेवतमानुष्टुभं ।

---

(१२६) न तं शैलूषः। कुल्मलबर्हिषो । (१२७) रात्रिः भारद्वाजो० । (१३३) त्रिष्टुबन्तम् । (१३५) याममानुष्टुभं हि । (१३९) पूर्वार्धे । (१४०) आद्ये विष्टारपंक्ती; आद्या विष्टारपंक्तिः । (१४२) सारिसृक्कः । (१४४) वोर्ध्वकृशानो । (१४९) सवितार्चिनो हैरण्यस्तूपः; सवितार्यन्हैरण्य० । सवितार्चन्तो० । (१५०) मृळीको वासिष्ठं । (१५५) द्वितीया तृतीया । (१६५) प्रायश्चित्तमिदं वैश्वदेवं । (१६७) लिंगोक्तदेवता वा । (१६९) शंबरः । (१७६) द्वितीयं गायत्र्यार्भवी । (१७९) शिबिरौशीनरः । रौहिषदश्वो । (१८४) लिंगोक्तदेवतमानुष्टुभं ।



CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

१८५ महि सत्यधृतिर्वारुणिरादित्यं स्वस्त्ययनं गायत्रं वै । १८६ वातो वातायन उलो वायव्यं । १८७ प्राग्नये पंचाग्नेयो वत्स आग्नेयं तु । १८८ प्र नूनं तृचमाग्नेयः श्येनो जातवेदस्यं । १८९ आयं गौः सार्पराज्ञ्यात्मदैवतं सौर्यं वा । १९० ऋतं च माधुच्छंदसोऽघमर्षणो भाववृत्तमानुष्टुभं तु । १९१ संसं चतुष्कं संवननः संज्ञानमाद्याग्नेयी तृतीया त्रिष्टुप्, तृतीया त्रिष्टुप् । [ ६४ ] ( मन्त्राः ११८ ) ( इत्यष्टमाष्टकः । मन्त्राः १२८१ )

इति दशमं मण्डलम् । ( दशममण्डलस्य मन्त्राः १७५४ )

॥ इति कात्यायनमुनिकृता सर्वानुक्रमणी समाप्ता ॥

—※—

## ॥ अथ शौनकाचार्यकृतानुवाकानुक्रमणी ॥

॥ श्रीगणेशाय नमः ॥

सर्वं कर्म सफलं यत्र तुष्टेऽतुष्टे न किंचित्तमहं नमामि ।
विनायकं गिरिराजेंद्रपुत्रीमहेश्वरप्रियसूनुं घृणाङ्घ्रिं १
बह्वृचानां जनानां तु शौनकस्य प्रसादतः । अनुवाकानुक्रमणीरूपं किंचित्प्रवर्ण्यते २
पितृदेवर्षिश्राद्धेभ्यो ब्राह्मणेभ्यश्च सर्वशः । आचार्येभ्यो गुरुभ्यश्च प्रणम्य प्रयतः शुचिः ३
मधुच्छंदःप्रभृतिभिर्ऋषिभिर्हि तपोबलात् । दृष्टानामनुवाकानामृक्षु वक्ष्याम्यतंद्रितः ४
सूक्तादिपरिमाणं तु संख्यां च क्रममेव च । मंडले मंडले चैव यावंतो हि समीरिताः ५
सूक्तसंख्यानुवाकानां सूक्तानामृक्समाहिता । पदाक्षरसमाम्नायं छंदस्येव प्रतिष्ठितं ६
एकैकमनुवाकं तु खिलानि ब्राह्मणानि च । संवत्सरे संवत्सरे पठेदहरहः शुचिः ७
श्रावणस्य तु मासस्य पौर्णमास्यामुपक्रमः । समाप्य तर्पयेद्देवानृषीन्पितॄननुक्रमात् ८
ऋग्वेदे शैशिरीयायां संहितायां यथाक्रमं । प्रमाणमनुवाकानां सूक्तैः शृणुत शाकलाः ९

आप्रीद्रष्टारः ।

कण्वा[१]ऽङ्गिरो[२]ऽगस्त्य[३]शुनका[४] विश्वामित्रो[५]ऽत्रिरेव[६] च । वसिष्ठ[७]कश्यप[८]वाध्र्यश्वा[९] जमदग्निरथोत्तरं[१०] १०

आप्रीसूक्तानि ।

श्लोकस्यास्य यथासंख्यं सूक्तानि दश वै विदुः । न[१] आ वहा,ऽग्ने[२] आ वहा,ऽद्य[३] राजसी,त्यग्निर्नि[४], च ११
समित्समित्सु[५], शोचिषे[६], जुषस्व[७], विश्वतस्तथा[८] । इमां मे[९], अद्य[१०] मन्विमा यथर्षिपक्ष आप्रियः १२
वसिष्ठशुनकौ विना समिद्धसर्वपक्षता । जुषस्वादिद्वितीयया तंनूनपाद्गिरोधिता ।
यजुः श्रुतौ तथाश्रुतेः समिद्धसूक्तमध्यतः १३
प्रजापतेः पशोः सदा भवेयुरद्य मन्विमाः । इतीरितं हि बह्वृचैर्यथर्षि वेति सूत्रतः १४

---

( १ ) कर्मफलं । ( ३ ) पितृदेवऋषिश्राद्धेभ्यो; पितृदेवर्षिसाध्येभ्यो, पितृदेवार्षिसिद्धेभ्यो । ( ४ ) मधुछंदप्रभृतिभिर्ऋषिभिर्हि; दृष्टानामनुवाकानामृक्षु । दृष्टानामनुवाकानां संख्यां । ( ५ ) आदिं सूक्तपरिमाणं संख्यां च क्रममेव च । ( ११ ) यथासंख्य, राजसीत्यग्निर्निहितः । [ १०-१२ ] ( १ ) ऋ० १।१३, ( २ ) ऋ० १।१४२ ( दीर्घतमा ); ( ३ ) ऋ० १।१८८; ( ४ ) ऋ० २।३; ( ५ ) ऋ० ३।४; ( ६ ) ऋ० ५।५; ( ७ ) ऋ० ७।२; ( ८ ) ऋ० ९।५; ( ९ ) ऋ० १०।७०; ( १० ) ऋ० १०।११०; ( १३ ) जुषस्व द्वितीयया यजू याद्गिरोधिनां, जुषस्व द्वितीयया यजू यद्गिरोभिनं; यजुः श्रुतो । ( १४ ) यथो, यशो, अशः । यदा ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

## अथानुवाकाः ।

(१) अग्निमीळे त्रिसूक्तस्तु (२) सुरूपं (३) द्व चतुःसूक्तौ । (४) अग्निं (५) सोमानमित्येतौ षट्कौ (६) कस्येति सप्तकः १५
(७) त्वमग्ने पंचकं विद्यात् (८) प्र वो यज्ञमथाष्टकं । (९) अग्ने विवस्वद (१०) भि त्यं (११) नू चित्ते सप्तकास्त्रयः १६
(१२) पश्वा न नवकं विद्याद् (१३) पप्रयंतो दशैकं च । खैलिकानामनादेशोऽस्मिन्ग्रंथेऽनुवाकानां १७
यस्तु चर्चायते वेदे तस्य संख्येति नः श्रुतिः । (१४) प्र ये शुंभंते नवक (१५) मिमं द्वादशकं विद्यात् १८
(१६) इंद्रं मित्रं दशैवाथ (१७) नासत्याभ्यां तु पंचकं । (१८) कदित्था षट् परः सप्त (१९) मिमा (२०) त्वा जुवः षट्कं १९
(२१) वेदिषदे सप्तदशा (२२) बोधीत्यष्टौ सूक्तानि । (२३) कया त्रिपंचसूक्तस्तु (२४) युवोर्द्वादशकं विद्यात् २०
इत्याद्ये मण्डले दृष्टाश्चत्वारो विंशतिश्चैव ।

### प्रथमे मण्डले बाष्कलसंहिताक्रमः ।

गौतमादौशिजः कुत्सः परुच्छेपादवेः परः । कुत्सादीर्घतमा इत्येष तु बाष्कलकः क्रमः २१

### द्वितीयादिमण्डलानामनुवाकाः ।

(२५) त्वं (२६) यो (२७) गणानामा (२८) ते दश तृतीय एकादशास्त्रयः परे ।
(२९) सोमस्य मा तवसं द्वादशोक्त (३०) प्र वो देवायेति सप्तदशकं तु विद्यात् २२
(३१) इच्छंति त्वा नवं (३२) द्रं मतिस्त्रिपंचको नवक (३३) इमं महे ।
(३४) त्वां ह्यग्ने दश (३५) भद्रं (३६) यज्ञस्त्वेकादशकावुभाविमौ २३
त्रयोदशायं (३७) प्र ऋभुभ्य ईरितो (३८)ऽग्नं पिबेत्येष चापि त्रयोदश ।
(३९) अबोध्यग्निः समिधा चतुर्दशातः परोऽष्टादशकः (४०) प्र वेधसे २४
(४१) महि महे द्वादशको (४२) विदास्तथा (४३)ऽऽरुद्रासः षोळश (४४) यस्त्रिपंचकः ।
४५) त्वं ह्यग्ने पंचदश (४६) त्वमग्ने (४७) वृषा महो विंशति (४८) यो रयिवस्तु षट्कः २५
द्विषड् (४९) हुवे (५०) स्तुषेऽथ द्विसप्तकः षष्ठः षष्ठे मंडले योऽनुवाकः ।
(५१) अग्निं नरः सप्तदशाथ षोळश (५२) त्वे ह (५३) प्र शुक्रा अधिका तु विंशतिः २६
(५४) क ईं व्यक्ताः पंचदशोना विंशतिर (५५) प स्वसुः पंचदश (५६) प्र वीरया ।
(५७) मा चिन् (५८) महाँ इंद्र (५९) इंद्रः सुतेषु पंचाथ सप्ताष्ट (६०) वयं द्विपंचकः २७
(६१) यो यजाति द्वादशो (६२) मे ह पट्को (६३)ऽग्ने दशैकादशको (६४) य इत्युत ।
त्रयोदशा (६५) तू न इंद्र क्षुमंतमतः परो दशको (६६) गौर्धयत्ययं २८
(६७) स्वादिष्ठया त्र्यष्टसूक्तः (६८) पवस्व त्रिंशत्सषट्कः परः सप्तको (६९)ऽया ।
(७०) प्राष्टादशैकादशकः (७१) प्र ते (७२)ऽस्य प्रेष्ठा सप्तैकादशकः (७३) सखायः २९
(७४) अग्ने बृहन् षोळशकस्त्रयोदश (७५) त्वष्टा (७६) प्र देवत्रेति चाष्टादशा (७७) च्छ ।
अष्टा (७८) विदं षोळशकस्तु (७९) भद्राः (८०) सत्येन षट् (८१) सं नवं (८२) द्व त्रयोदश ३०
(८३) तमस्य द्यावापृथिवी त्र्यष्टकः परस्त्रयोविंशति (८४) र्नासदासीत् ।

---

(१५) चतुष्ककौ । (१७) उपप्रयंतो दशैवं च, विद्याद्धुपैकादशकं तथा । अस्मिन्ग्रंथेऽनुवाकानामिह स्मृतः । (१८) न श्रुति । नवकमिदं । द्वादशकं विदुः द्वादशके विदुः । (१९) जुवष्षट्कं, जुवश्च षट् । (२०) सप्तदशाबोधीत्येषोऽष्टसूक्तकः । विदुः । (२१) विंशतिस्तथैव, विंशतिस्तथा । (२१) बाष्कलकः क्रमात् । (२५) षोडश । यस्त्रिपंचकः यत् पंचकः । रयिवः षट् । (२६) द्विषद्धुवे । द्विषट् हुवे । द्विः षडस्तु य । षोडश । त्वे ह यत् । (२७) पंचदश ... ... ऊना विंशतिरप । पंचदशैकोनविंशतिरप, पंचदशेको नु विंशतिपः । (२८) इत्यथ इत्थ । इंद्र ... अतः । (२९) सप्तकोऽयाः । प्राष्टादशैकादश । (३०) षोडशकस्त्रयोदश । चाष्टादशाछ । चाष्टादशाथ । चाष्टादश ।

Vinay Avasthi Sahib Bhuvan Vani Trust Donations

ऋग्वेदांत्यो द्वादशकोऽनुवाकश्चत्वारिंशच् (८५)छास इत्थेति चास्मिन् ३१

## मण्डलेष्वनुवाकसंख्या ।

[१] आद्ये चतुर्विंशतिर्हानुवाका [२]अतः परं मंडलं यच्चतुष्कं ।
[३-४] द्वे पंचके [५-६-७] त्रीणि षट्कानि चैव [८] दशाष्टमं [९] सप्त नवमं [१०] द्वादशांत्यं ३२

## मण्डलेषु सूक्तसंख्या ।

एकाधिका स्यान्नवतिः शतं [१९१] च वदंति वै मण्डलमादितो यत् ।
चत्वारिंशत्त्रीणि [४३] चाहुर्द्वितीयं सूक्ते [६२] च षष्टिं च तृतीयमाहुः ३३
अष्टापंचाशदपि [५८] यच्चतुर्थं सप्ताधिकाशीतिरतः [८७] परं स्यात् ।
पंचाधिका [७५] सप्ततिरुत्तरं तु चत्वारि वासिष्ठमथो शतं [१०४] च ३४
द्वे चैव सूक्ते नवतिं [९२] च विद्यादथाष्टमं नवमं वै शतं [११४] स्यात् ।
चतुर्दश त्वाहुरथाधिकान्यप्याद्ये यदुक्तं दशमे [१९१] तथैव ३५

## ऋग्वेदस्य सूक्तसंख्या ।

एतत्सहस्रं दश सप्त[१०१७] चैवाष्टावतो बाष्कलकेऽधिकानि [१०२५]।

## वेदपारायणफलम् ।

तत्पारणे शाकले शैशिरीये वदंति शिष्टा न खिलेषु विप्राः ३६
पंचाशीति[८५]र्दाशतयेऽनुवाका दृष्टाः पुराणैर्ऋषिभिर्महात्मभिः ।
यस्तानृग्विद्वेद चैवाप्यधीते स नाकपृष्ठं भजते ह शश्वत् ३७
अध्यायानां (६४) चतुः षष्टिर्मंडलानि दशैव (१०) तु । वर्गाणां (२००६) तु सहस्रे द्वे संख्याते च षळुत्तरे ३८
सहस्रमेतत्सूक्तानां निश्चितं खैलिकैर्विना । दश सप्त च पठ्यंते संख्यातं वै पदक्रमं ३९

## ऋग्वेदस्य वर्गाः।

एकर्चे एकवर्गः (१) स्यादेकश्च (१) नवकस्तथा । द्वौ (२) वर्गौ तु द्व्यृचौ ज्ञेयौ, त्र्यूनं तृचशतं (९७) स्मृतं ४०
चतुष्कं शतमेकं (१७४) च चत्वारः सप्ततिस्तथा । पंचकानां सहस्रं तु द्वे च सप्तोत्तरे शते (१२०७) ४१
त्रीणि शतानि (३४६) षट्कानां, चत्वारिंशत् षट् च वर्गाः ।
शतमूनविंशतिः (११९) सप्तकानां न्यूना षष्टिरष्टकानां (५९) ४२
ऋचां दश सहस्राणि ऋचां पंचशतानि च । ऋचामशीतिः पादश्च पारणं संप्रकीर्तितं ॥ ( ऋचः १०५८० । ) ४३
अर्धर्चानां सहस्राणामेकविंशतिकं तथा । शतद्वयं तु द्वात्रिंशत्सपादं मुनिभिः पुरा ॥ ( अर्धर्चः २१२३२ । ) ४४
शाकल्यदृष्टे पदलक्षमेकं सार्धं च वेदे त्रिसहस्रयुक्तं ।
शतानि चाष्टौ दशकद्वयं च पदानि षट् चेति हि चर्चितानि ॥ ( चर्चितानि पदानि १५३८२६ ) ४५
एकं च शतसहस्रं दश च सहस्राणि सप्त शतानि चर्चापदानि ज्ञेयानि, पदानि चान्यानि चत्वारि (चर्चापदानि ११०७०४)।
चत्वारि चात्र शतसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि द्वात्रिंशच्चाक्षरसहस्राणि । ( अक्षराणि ४३२००० )

॥ इत्यनुवाकाद्यनुक्रमणी समाप्ता ॥

---

( ३१ ) छास इत्था चास्मिन् । चत्वारिंशछास इत्थेति चास्मिन्नृग्वेदान्ते द्वादशकोऽनुवाकः । ( ३२ ) आद्यं । चतुर्विंशतिरिहानुवाका अतः । यत् ... .... अतः परं मंडल चतुष्कं । द्वादशांत्यं च । (३५) त्वाहुरथाधिकानि त्वाद्ये । ( ३६ ) बाष्कलकोऽधिकारे । बाष्कलाधिकारो । पारण्ये शाकले शैशीरीय तत्पारणे शाकले शैशिरे तु । शैशिरीया वदंति शिष्टानखिलेषु विप्रा इति पठंत्यन्ये । ( ३७ ) पंचाशीतिर्दाशतय्ये । भजेतेह । ( ४० ) एकवर्ग स्यात् । वर्गौ ... ... द्वृचौ । ( ४२ ) षट्कवर्गाः । षट्कवर्गः । शतमूनविंशकं । त्र्यूनं द्विषष्टिरष्टकानां । (४३) पादश्चैतत्पारायणमुच्यते । ( ४५ ) सार्धं ... ... वेदे ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



## ॥ अथ च्छन्दःसंख्या ॥

एकपंचाशदृग्वेदे गायत्र्यः शाकलेयके । सहस्रद्वितयं चैव चत्वार्येव शतानि तु ॥ १ ॥
त्रीणि शतानि सैकानि चत्वारिंशत्तथोष्णिहः । अनुष्टुभां शतान्यष्टौ पंचाशत्पंचसंयुता ॥ २ ॥
बृहतीनां शतं ज्ञेयमेकाशीत्यधिकं बुधैः । शतानि त्रीणि पंक्तीनां द्वादशाभ्यधिकानि तु ॥ ३ ॥
पंचाशत्त्रिष्टुभः प्रोक्तास्तिस्रश्चैव ततोऽधिकाः । सहस्राण्येव चत्वारि विज्ञेयं तु शतद्वयं ॥ ४ ॥
चत्वारिंशत्तथाष्टौ च तथा चापि शतत्रयं । जगतीनामियं संख्या सहस्रं तु प्रकीर्तितं ॥ ५ ॥
दशैवातिजगत्योऽपि तथा सप्त न संशयः । शक्वर्योऽपि तथैवोक्तास्तथा नव विचक्षणैः ॥ ६ ॥
नव चैवातिशक्वर्यः षळष्टयः प्रकीर्तिताः । अशीतिश्च चतस्रश्च तथात्यष्टिऋचः स्मृताः ॥ ७ ॥
धृतिद्वयं विनिर्दिष्टमेकातिधृतिरेव च । एकपदास्तु षट् प्रोक्ता द्विपदा दश सप्त च ॥ ८ ॥
प्रगाथा बार्हता येऽत्र तेषां शतमुदाहृतं । चतुर्नवतिरेवोक्तास्तद्वद् द्वृचास्त्वसंशयः ॥ ९ ॥
काकुभानां तु पंचाशद्विज्ञेया पंचसंयुता । महाबार्हत एवैक एवं सार्धं शतद्वयं ॥ १० ॥
एवं दश सहस्राणि शतानां तु चतुष्टयं । ऋचां व्यधिकमाख्यातमृषिभिस्तत्त्वदर्शिभिः ॥ ११ ॥

॥ इति छंदः संख्या समाप्ता ॥



# परिभाषा-खण्डौ ।

(१३)

गोधा घोषा विश्ववारा,ऽपालोपनिषन्निषत् ॥ ब्रह्मजाया जुहूर्नामागस्त्यस्य स्वसादितिः ॥
इन्द्राणी चेन्द्रमाता च सरमा रोमशोर्वशी ॥ लोपामुद्रा च नद्यश्च यमी नारी च शश्वती ॥
श्रीर्लाक्षा सार्पराज्ञी वाक् श्रद्धा मेधा च दक्षिणा ॥ रात्री सूर्या च सावित्री ब्रह्मवादिन्य ईरिताः ॥१३॥ ✽

(१४)

पादा अतिजगत्यां तु त्रयो द्वादशकाः परौ ॥ अष्टकौ शक्करीपादाः सप्तैवाष्टाक्षराःस्मृताः ❀ ॥
अतिशक्करपादौ द्वावादितः षोळशाक्षरौ + ॥ जागतश्चाष्टकावष्टिपादाः षोळशकास्त्रयः ॥
अष्टकौ चात्यष्टिपादौ जागतौ चाष्टकास्त्रयः ॥ जागतश्चाष्टकश्चाथ धृतिपादौ तु जागतौ ॥
पादास्त्रयोऽष्टकाश्चाथ षोळशाक्षर एव च ॥ अष्टकश्चाथातिधृतौ द्वौ पादौ जागतौ ततः ✽ ॥
त्रयोऽष्टका जागतश्च तथैवाष्टक इत्यपि ✍ ॥ परः सप्तकपादास्तु प्रसंगात्स्वयमीरिताः ॥ १४ ॥



✽ श्रीः लाक्षा मेधा चेति तिसृणां मन्त्राः संहितायां न दृश्यन्ते । तथा च (१) काश्यप्यौ शिखण्डिन्यौ अप्सरसौ (९।१०४) (२) इन्द्रस्नुषा वसुक्रपत्नी (१०।२८।१), (३) पौलोमी शची (१०।१५९), (४) नीवावरी सिकता (९।८६।११–२०, पृश्नयोऽजाः ३१–४०) अत्र संग्रहीता न दृश्यन्ते ।
(❀) ० क्षराश्च ते । (+) ० पादौ द्वौ कर्तव्यौ षोळशाक्षरौ । (✽) जागत षोळशाक्षरः । तथैवाष्टाक्षरावपि ।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

Vinay Avasthi Sahib Bhuvan Vani Trust Donations



# अथ छन्दसामुदाहरणानि ।

[१] अयं देवाय, [२] ऽऽभिष्टे अद्य, [३] ऽग्ने तमद्य, [४] ता मे अश्व्यानां, [५] त्वावतः, [६] पुरूतमं, [७] स सुन्वे य, [८] ईशाना, [९] आपः पृणीत, [१०] प्रेष्ठं दश ॥ ४ ॥ ( १ )

[१] य इन्द्र, [२] युंजंति हरी, [३] शर्धंशर्धं वो, [४] ददी रेक्णः, [५] प्र या घोषे, [६] हरी यस्य, [७] पितुं नु, [८] मंसीमह्यष्टौ ॥ ५ ॥ ( २ )

| छंदोभेदः | अक्षर-संख्या | चरणा-क्षराणि | सूत्रं | उदाहरणमंत्रप्रतीकं । | मंत्रस्थानं मं० | सू० | मं० |
|---|---|---|---|---|---|---|---|
| **१ ( ४ ) गायत्री** | | | | | | | |
| गायत्री + | २४ | ८।८।८ | ( प्रथमं छंदः ) त्रिपदा गायत्री । | अयं देवाय० । | १ | २० | ७ |
| पदपंक्तिः ॐ | २६ | ५।५।५।५।६ | पंचकाश्चत्वारः षट्कश्चैकः पदपंक्तिः । | आभिष्टे अद्य० । | ४ | १० | ४ |
| पदपंक्तिः | २५ | ५।५।५।४।६ | ( वा ) चतुर्थश्चतुष्कः पदपंक्तिः । | अग्ने तमद्य० । | ४ | १० | १ |
| उष्णिग्गर्भा | २४ | ६।७।११ | षट्सप्तैकादशा उष्णिग्गर्भा । | ता मे अश्व्यानां० । | ८ | २५ | २२ |
| पादनिचृत् | २१ | ७।७।७ | त्रयः सप्तकाः पादनिचृत् । | त्वावतः पुरूवसो० । | ८ | ४६ | १ |
| अतिनिचृत् | २० | ७।६।७ | मध्यमः षट्कश्चेत् अतिनिचृत् । | पुरूतमं पुरूणां० । | ६ | ४५ | २९ |
| यवमध्या | २४ | ७।१०।७ | दशकश्चेत् यवमध्या । | स सुन्वे यो वसूनां० । | ९ | १०८ | १३ |
| वर्धमाना | २१ | ६।७।८ | यस्यास्तु षट्सप्तकाष्टकाः सा वर्धमाना । | ईशाना वार्याणां० । | १० | ९ | ५ |
| प्रतिष्ठा | २१ | ८।७।६ | त्रिपरीता प्रतिष्ठा । | आपःपृणीत भेषजं० । | १० | ९ | ७ |
| ह्रसीयसी | १९ | ६।६।७ | द्वौ षट्कौ सप्तकश्च ह्रसीयसी । | प्रेष्ठमु प्रियाणां० । | ८ | १०३ | १० |
| [त्रिपरीता ह्रसीयसी ,, | | ७।६।६ | ,, | इन्द्रः सहस्रदाम्नां० । | १ | १७ | ५] |
| **२ ( ५ ) उष्णिक्** | | | | | | | |
| उष्णिक् | २८ | ८।८।१२ | (द्वितीयम्) उष्णिक् त्रिपदांत्यो द्वादश । | य इंद्र सोम पातमः । | ८ | १२ | १ |
| पुरउष्णिक् | २८ | १२।८।८ | आद्यश्चेत् पुरउष्णिक् । | युंजंति हरी इषिर० । | ८ | ९८ | ९ |
| ककुप् | २८ | ८।१२।८ | मध्यमश्चेत् ककुप् । | शर्धंशर्धं व एषां० । | ५ | ५३ | ११ |
| ककुम्न्यंकुशिरा | २७ | ११।१२।४ | त्रैष्टुभजागतचतुष्काः ककुब् न्यंकुशिरा । | ददी रेक्णस्तन्वे० । | ८ | ४६ | १५ |
| तनुशिरा | २८ | ११।११।६ | एकादशिनोः परः षट्कस्तनुशिरा । | प्र या घोषे भृगवा० । | १ | १२० | ५ |
| पिपीलिकमध्या | २८ | ११।६।११ | मध्ये चेत् पिपीलिकमध्या । | हरी यस्य सुयुजा० । | १० | १०५ | २ |
| अनुष्टुब् गर्भा | २९ | ५।८।८।८ | आद्यः पंचकस्त्रयोष्टका अनुष्टुबगर्भा । | पितुं नु स्तोषं० । | १ | १८७ | १ |
| उष्णिक् × | २८ | ७।७।७।७ | चतुः सप्तकोष्णिगेव । | मंसीमहि त्वा वयं० । | १० | २६ | ४ |

\+ ओमासश्चर्षणी० ( मं० १, सू० ३, मं० ७ )। ॐ घृतं न पूतं० । ( मं० ४, सू० १०, मं० ६ )। [ उष्णिग्वा ]

× नदं व ओदतीनां० । ( मं० ८, सू० ६९, मं० २ )।

CC-O. Nanaji Deshmukh Library, BJP, Jammu. An eGangotri Initiative

